अथ यजुर्वेदोक्तदुर्मरणमृतानां-

# नारायणबलीप्रयोगो भाषाटीकायुतः प्रारम्भः ।

श्रीगणेशाय नमः ॥ तत्रादौ स्नानविधिना स्नात्वा स यथा तत्र तावत्सूतकान्ते सर्वोपहारान् मृत्तिका-गोमय-कुशान् कृष्णतिलान् सुरभिपुष्पाण्यादाय नद्यादिकं गत्वा तत्तीरे शुचौ देशे पृथक् पृथक् स्थापयेत् । ततः पाणिपादं प्रक्षाल्य कुशहस्तो बद्धशिखो यज्ञोपवीती आचामेत् ॥

प्रथम स्नानविधिसे स्नान करै । उसका क्रम यह है कि सूतक के अन्त ( एकादशाहके रोज ) संपूर्ण

सामग्री स्नानके लिये मृत्तिका इत्यादि लेकर नदी इत्यादिके तीरपर जाय और वहां शुद्ध स्थानको धोकर मृत्तिका इत्यादि पृथक् पृथक् रख दे। उसके बाद हाथ पैर धोकर हाथमें कुशाओंको लेकर शिखा बाँधे। सव्यसे आचमन करै।

ॐ उरुᳬ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेत वा उं ॥ अपदे पादा प्रति धातवे करुतापवक्ता हृदयाविधश्चित् ॥ नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥ इति तोयमामन्त्र्य ॥ ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नो ऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः ॥ इति त्रिःप्रदक्षिणं जलमावर्तयेत् ॥ ॐ सुमित्रिया नऽआपऽओषधयः सन्तु इति जलाञ्जलिमादाय ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मऽइति तटे क्षिपेत् ॥

बाद 'उरुꣳ हि राजा' इस मंत्रसे जलपर हाथ रखकर अभिमंत्रण करै। उसके बाद 'ॐ ये ते शत-मिति' मंत्रसे तीन बार प्रदक्षिण क्रमसे जलको घुमावे। उसके बाद 'ॐ सुमित्रिया' इस मंत्रसे एक अंजलि जल लेकर 'ॐ दुर्मित्रिया' इस मंत्रसे द्वेष्यके लिये तटके किनारे पर छोड़ै।

ततो मृदमादाय तोयेनाभिषिक्तकटिं वस्तिं ऊरू-जङ्घे चरणौ करौ प्रत्येकं त्रिस्त्रि-रनुलिप्य जलेन प्रक्षाल्य एकं पादं जले द्वितीयपादं स्थले निधायाचामेत् ॥ तत उदकं नमस्कृत्य ॐ तीर्थोदकाय नमः ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाꣳसुरे स्वाहा ॥ इति मृत्तिकामादाय दक्षिणहस्तेन शिरसि नाभिपर्यन्तं वामहस्तेन नाभितः पादपर्यन्तमनुलिप्य नाभिमात्रे जले प्रविश्य ॥ ॐ आपो ऽअस्मान्मातरꣳ शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ॥ विश्वꣳ हि रिप्रम्प्रवहन्ति

देवीऽइति मंत्रेण सूर्याभिमुखो निमज्जेत् । ततः स्नात्वा ॐ उद्विदाभ्यः शुचिरापूत ऽएमि इति निमज्ज्योन्मज्ज्याचम्य ॥

उसके वाद गीली मिट्टी लेकर कटि वस्ति ऊरू जंघा पाद हाथ इनमें तीम तीन दफे लगाकर जलसे धोवे । इसके वाद दहिना पैर जलमें बाँया पैर जमीनपर रखकर आचमन करै । 'ॐ तीर्थोदकाय नमः' इससे जलको नमस्कार करै । इसके वाद 'ॐ इदं विष्णु' इस मन्त्रसे दहिने हाथसे मृत्तिका शिरसे नाभि तक बाँये हाथसे नाभिसे पैर पर्यन्त सर्वांगमें लगाकर नाभिमात्र जलमें जाकर 'ॐ आपो अस्मान्' इस मंत्रसे सूर्यकी तरफ मुँह करके गोता लगावै । स्नान करके 'ॐउदिदाभ्यः' इससे फिर गोता लगाकर वाद आचमन करै ।

ॐ मानस्तोके तनये मा न ऽआयुषि मा नो गोषु मा नो ऽअश्वेषु रीरिषः ॥

मा नो व्वीरान्नुद्रभामिनो व्वधीर्हविष्मन्तः सदमि त्वा हवामहे इति मृद्-वद्गोमयं लिम्पेत् ॥

'ॐ मानस्तोके' इस मंत्रसे मृत्तिकाकी तरह गोवरको हाथमें लेकर जल मिलाकर सूर्यकी तरफ दिखा कर दहिने हाथसे शिरसे नाभितक बाँयेसे नाभिसे पैर तक लगावै ।

ॐ इमम्मे व्वरुण ऽश्रुधी हवमद्या च मृडय॥त्वामवस्युराचके॥१॥ॐ तत्त्वायामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणे हवोद्ध्युरुशꣳ समान ऽआयुः प्रमोषीः॥ २॥ॐ त्वन्नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवया-सिसीष्ठाः॥यजिष्ठो वह्नितमः शोशुचानो व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्॥३॥

ॐ स त्वन्नो ऽअग्ने वमो भवोती नेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ अवयक्ष्व नो व्वरुणᳬ रराणो व्वीहि मृडीकᳬ सुहवो न ऽएधि ॥४॥ ॐ मापोमौषधीर्हिᳬ सी-द्धाम्नो धाम्नो राजँस्ततो व्वरुण नो मुञ्च ॥ यदाहुरघ्न्या ऽइति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्च ॥५॥ ॐ उदुत्तमं व्वरुण पाशमस्मदवाधमं व्विमध्यमᳬ श्रथाय॥ अथा व्वयमादित्यव्व्रते तवानागसो ऽअदितये स्याम॥६॥ ॐ मुञ्चन्तु माशपथ्यादथो व्वरुण्यादुत ॥ अथो यमस्य पड्वीशात्सर्व्वस्माद्देव किल्व्बिषात् ॥७॥ ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ॥ अवदेवैर्देवकृतमेनो यासिषमव्मर्त्त्यैर्मर्त्त्यकृतं पुरुराव्णो देवरिषस्पाहि ॥८॥ इत्यष्टभिर्मंत्रैर्हस्तेन प्रत्येकं शिरसि जलं प्रक्षिपेत ॥

इसके बाद 'इमम्मे' इत्यादि आठ मंत्रोंसे प्रत्येक मंत्रके अन्तमें चुल्लूसे अथवा कुंभ मुद्रासे शिर पर जल डाले।

ततो वहति जले प्रवाहाभिमुखः स्थिरे जले सूर्याभिमुखो मौनी शनैरिव निमज्जयेत् ॥ तत आचम्य ॥ ॐ कारव्याहृतिगायत्रीभिरापो हि ष्ठेत्यादि तिसृभिः ॐ इदमापः प्रवहतावद्यञ्च मलञ्च यत् ॥ यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् आपो मा तस्मादेनसः पवमानश्च मुञ्चतु॥१॥ॐ हविष्मतीरिमा ऽआपो हविष्माँ२ऽ आविवासति ॥ हविष्मान्देवो ऽअध्वरो हविष्माँ२ ऽअस्तु सूर्यः॥२॥ॐ देवीरापो ऽअपान्न पाद्यो वं ऽऊर्म्मिर्हविष्य ऽइन्द्रियावान्मदिन्तमः॥तन्देवेभ्यो देवत्रादत्तशुक्र-

पेभ्यो येषां म्भागस्थस्वाहां ॥३॥ ॐ कार्षिरसि समुद्रस्य त्वा क्षित्या ऽउन्नयामि ॥ समापों ऽअद्भिरग्मत समोषधीभिरोषधीः ॥४॥ ॐ अपो देवा मधुमतीरगृभ्णन्नूर्ज- स्वती राजस्वश्चितानाः ॥- याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥५॥ ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ॥ पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥६॥ ॐ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये ॥ शं य्योरभि स्रवन्तु नः ॥७॥ ॐ अपा ᳪ रसमुद्वयस ᳪ सूर्ये सन्त ᳪ समाहितम् ॥ अपा ᳪ रसस्य यो रसस्तं व्वो गृह्णाम्म्युत्तममुपयाम गृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्म्येष ते योनिरिन्द्राय त्वाजुष्टतमम् ॥८॥ ॐ अपो देवी रुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः ॥ तासामास्थाना

दुर्जिह्तामोषधयः सुपिप्पलाः॥८॥ॐ पुनन्तुमा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः। पवित्रेण शतायुषा॥ ॐ पुनन्तु मा पितामहाः पुनन्तु प्रपिता महाः॥ पवित्रेण शतायुषा विश्वमायु र्व्यश्नवै॥१०॥ ॐ अग्न ऽआयूंषि पवस ऽआसुवोर्ज्जमिषञ्च नः॥ आरे बाधस्व दुच्छुनाम्॥११॥ ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः॥ पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा॥१२॥ ॐ पवित्रेण पुनीहि मा शुक्रेण देवदीद्यत्॥ अग्ने क्रत्वा क्रतूँ १ऽ रनु॥१३॥ ॐ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा॥ ब्रह्म तेन पुनातु मा॥१४॥ ॐ पवमानः सो ऽअद्य नः पवित्रेण विचर्षणिः॥ यः पोता स पुनातु मा॥१५॥ ॐ उभाभ्यान्देव-

सवितः पवित्रेण स्वेन च ॥ मा म्पुनीहि विश्वतः ॥१६॥ ॐ वैश्वदेवी पुनती देव्यागाद्यस्यामि मावह्वयस्तन्वो वीतपृष्ठाः ॥ तया मदन्तः सधमादेषु वयᳬ स्याम पतयो रयीणाम् ॥१७॥ ॐ चित्पतिर्म्मा पुनातु वाक्पतिर्म्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥१८॥ इत्यष्टादशप्रत्येकमंत्रेण कुशत्रयेण मार्जनं कुर्यात् ॥

उसके बाद वहते हुए जलमें प्रवाहको तरफ मुख करके और स्थिर जलमें सूर्यको तरफ मुँह करके मौन होकर धीरेसे स्नान करै ॥ आचमन करै ॥ बाद ओंकारके सहित 'भूर्भुवः स्वः' व्याहृति 'तत्स-वितुः' गायत्री 'आपो हिष्ठा०' यो 'वः शिवतमो०' 'तस्मा ऽअरङ्ग' इन तीनों मंत्रोंसे और आगे लिखे हुये अट्ठारह मन्त्रों से तीन कुशा से जल लेकर अपने ऊपर छिड़कै ।

ततः पूर्ववदिमं मे इत्याद्यष्टमन्त्रैः पुनः शिरसि जलं क्षिपेत् ॥ ततः जले मग्नोऽघमर्षणं द्रुपदादिव वा आयंगौ वा ऋतं च सत्यं प्राणायामं त्रिरावर्तयेत ॥ वा ॐ कारं त्रिरावर्तयेत् ॥ विष्णुं वां स्मरेत् ॥ इदं स्नानं स्त्रीशूद्रौ तु न कार्यम् ॥ इति स्नानविधिः ॥

बाद 'इमं मे' इत्यादि आठ मन्त्र जो पहले कह आये हैं उन मन्त्रोंसे फिर अपने शिरपर चिल्लूसे चाहे कुम्भमुद्रासे जल डालै। उसके बाद जल में डूबकर अघमर्षण करै। इस मन्त्र से 'द्रुपदादिव' या 'आयंगौ' या 'ऋतं च सत्यं' तीन वार पढै। या तीन प्राणायाम करै। या तीन दफे ॐ कहै। या 'विष्णवे नमः' तीन दफे कहै। इस स्नान को स्त्री शूद्र न करैं। यह स्नान विधि समाप्त हुई।

आचम्य ॥ ततः स्नानाङ्गतर्पणं कार्यम्॥ सव्येन प्राङ्मुखो ब्रह्मादयो देवास्तृप्य-

न्ताम् ॥ गौतमादय ऋषयस्तृप्यन्ताम् ॥ तत उदङ्मुखो यज्ञोपवीतं कण्ठं कृत्वा ॐ सनकादयो मनुष्यास्तृप्यन्ताम् ॥२॥ ततोऽपसव्येन दक्षिणाभिमुखः कृष्णतिलोदकैः ॐ कव्यवाडनलादयो देवपितरस्तृप्यन्ताम् ॥३॥ ॐ अस्मत्पितृ-पितामह-प्रपितामहास्तृप्यन्ताम् ॥ अस्मन्मातृपितामही-प्रपितामह्यस्तृप्यन्ताम् ॥ अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहास्तृप्यन्ताम् ॥ अस्मन्मातामही-प्रमातामही-वृद्धप्रमातामह्यस्तृप्यन्ताम् ॐ आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यन्ताम् ॥ एवं तर्पणं कृत्वा ॥ यन्मया दूषितं तोयं मलैः शारीरसम्भवैः ॥ तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ इति यक्ष्मणे जलं दत्वा तीरमागत्य ॐ अनग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम ॥ भूमौ

दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् । इति जलाञ्जलिस्तटे क्षिपेत् ॥

इस के बाद आचमन करके स्नान के अंग में तर्पण करै। सव्यसे ब्रह्मादिकोंको व गौतमादि ऋषियों को एक एकांजलि उत्तर मुँह कण्ठमें जनेऊ करके सनकादि मनुष्यों को दो दो अञ्जलि दक्षिणमुख तीन तीन अञ्जलि पितरोंको तर्पण करै । एक अंजलि 'यन्मया दूषितं' से और एक अंजलि 'अनग्निदग्धा' से तटपर दे ।

ततः सव्येनाचम्य सूर्यायार्घ्यं दद्यात् ॥ एहि सूर्य ! सहस्रांशो ! तेजोराशे ! जगत्पते ! ॥ अनुकम्पय मां भक्त्या गृहाणार्घ्यं नमोऽस्तु ते ॥

बाद सव्य होकर आचमन कर के सूर्य को अर्घ देवे ।

ततो जलाद्बहिरागत्य वस्त्रादिधारणं कृत्वा तिलकं च कृत्वा सन्ध्यावन्दनं

कुर्यात् ॥ प्रायश्चित्तगोनिष्क्रयसंकल्पः ॥

जल के बाहर निकल कर धोती अँगोछा बदले, तिलक लगा कर सन्ध्यावन्दन करै । इस के बाद प्रायश्चित्त गो संकल्प करें ।

अद्येत्यादि अमुकगोत्रस्यामुकप्रेतस्य ऊर्ध्वोच्छिष्टाधरोच्छिष्टसन्ध्याशौचलोपाकृत-स्नानमरणाऽऽशौचमरण - हरिनामोच्चारणवर्जितमरण - पञ्चगव्यप्राशनरहित - विकल्प-हृदय-भाषादिचैतन्य-म्लेच्छभाषादिवक्तव्यास्पर्शनादि-रक्तदर्शनाऽधर्मचिन्तन-विष्णुव-र्जिता-दत्तमरणाभावभावाक्रियाकर्मरहित-मार्जारमूषकादिस्पर्श-दृष्टिदोष-द्वात्रिंशद्दोषाऽ-परचतुःषष्टिदोषाऽष्टशल्या - रजस्वलासम्मार्जिनी - सूतिकादिसंसर्ग - स्पर्शदृष्टिदोषप -

रिहारार्थं मरणकाले तथा दहनकाले अविधिकृतस्नान आचन्द्रार्कं यावत् यन्मरणान्तकविशुद्ध्यर्थं उपनयनपापपरिहारार्थं देहशुद्ध्यर्थं महापातकोपपातकतत्समानवर्जितानां गुरुलघुपापानां आतुरावस्थायामभक्ष्यभक्ष्या-भोज्यभोजनाऽपेयपानादि-अगम्यागमनक्रियालोपोपन्नपरदेशपरज्ञातीयपरगृहे मरणे अर्द्धदाहे जलेन चिताशमने दक्षिणायने पञ्चकमध्ये त्रिपुष्करयमलयोगे रात्रौ कृष्णपक्षे गुरुहीने रुद्राक्ष-धात्री-तुलसी-तिल-सर्षप-गोपीचन्दन-गङ्गोदक-स्नपनरहितशववाहे तथा मार्गे शौचदेशे खर्परास्थिचर्मामेध्यकेशादिस्पर्शे अतीर्थे परकाष्ठे पराग्निदाहे मुखे आज्याहुतिरहिते कीटपतङ्गपक्षिचितामध्ये ज्वलितादिदोषपरिहारार्थं कुगतिनिवारणार्थमुत्तमलोकप्रा-

प्त्यर्थं नारायणबल्यधिकारसिद्ध्यर्थं पञ्चदशप्राजापत्यात्मकं प्रायश्चित्तं प्रति प्राजापत्यं गोमूल्यरजतादिप्रत्याम्नायद्वारा यथाकाले (अद्य वा) अहं आचरिष्ये ॥ होमजपादितीर्थयात्राद्वारा वा कुर्यात् ॥

'अद्ये' त्यादि ऐसा देश कालका उच्चारण करै बाद अमुकगोत्र वाले अमुक प्रेत को ऊपर के छिद्रों में अशुद्धि, नीचे के छिद्रों में अशुद्धि, अथवा दोनों छिद्रों में अशुद्धि, सन्ध्यालोप, शौच का लोप, स्नान किए बिना मरना, अशुद्धिमें मरना, भगवान् का नाम उच्चारण नहीं करना, पंचगव्य नहीं लेना, विकल्प सहित हृदय वाला होना, बोलने की इच्छा से चैतन्य होना, म्लेच्छ भाषा आदि बोलना, रजस्वला आदि का स्पर्श, रक्त दर्शन करना, अधर्म धर्म का चिन्तन, शालग्राम की मूर्त्ति का घरमें न होना, बिना दान किये मरना, अभाव भाव क्रिया कर्म रहित होना, बिलार मूसा आदि का स्पर्श होना,

दृष्टि का दोष, और भी बत्तीस दोष इस के अतिरिक्त चौंसठ दोष आठ शल्य ( हड्डी ), रजस्वला, संमार्जनी ( कूचा ), सूतिका आदिकों का संसर्ग दोष वा स्पर्श दोष वा दृष्टि दोष, इन दोषों के दूर करने के लिये और मरण समय में तथा दहन समय में विना विधि स्नान करना, चन्द्रमा सूर्यकी स्थिति तक जो मरने के अंत में शुद्धि हो उस के लिये, उपनयन पाप के दूर होने के लिये, शरीर शुद्धि के लिये, महा पातक उपपातक और इन की समता से वर्जित अन्य छोटे बड़े पातकों को दूर करने के लिये, और बीमारी के समय नहीं खाने योग्य वस्तुका खाना, खाने योग्य वस्तु को न खाना, नहीं पीने वाली वस्तु को पीना, नहीं गमन करने योग्य स्त्रीसे गमन करना, क्रिया का लोप होना, परदेश में मरना, अन्य ज्ञाति वालों से मरना, अन्य के घर में मरना, आधादाह होना, चिता का बुताजाना, दक्षिणायन सूर्य में, पञ्चकों में, त्रिपुष्कर में, यमलयोग में, रात्रि में, कृष्णपक्ष में, इन सब में मरना, गुरु से हीन होना, रुद्राक्ष-आँवला-तुलसी-तिल सरसों-गोपीचन्दन-गंगाजल-इन सब वस्तुओं से स्नान रहित

हुए मुर्दा को ले जाना, तथा मार्ग में अपवित्र स्थान में खप्पर हड्डी, चर्म्म अशुद्ध वस्तु केश आदि का स्पर्श होना, तीर्थ के बिना दाह होना, दूसरे के चिता वाली लकड़ी से दाह होना, मुख में घृत की आहुति को नहीं देना, चिता में कीड़े पतंग पक्षियों का जलना आदि दोष दूर होने के लिये, कुगति निवारण के लिये, जिससे उत्तम लोक की प्राप्ति हो, नारायणवलि के अधिकार की सिद्धि हो इस लिये पन्द्रह प्राजापत्य करै। प्रायश्चित्त के लिये एक एक प्राजापत्य में सोना या चाँदी आदि से गो मूल्य द्वारा १५ गोदान हुआ, इस को यथा काल में आचरण करूँगा, ऐसा संकल्प करै। या गायत्री जप होम आदि करै। अथवा तीर्थ यात्रा द्वारा प्रायश्चित्त करै ।

संकल्पः॥ ॐ तत्सदित्यादि अमुकगोत्रस्यामुकप्रेतस्य शृङ्गि-दंष्ट्रि-नखि-शस्त्रघात सर्प-जलमग्न-कण्ठग्राह-विषभक्षणाऽग्निदग्धविप्रमारितात्मघात - चाण्डालहस्तमरण-

चौरमारित-शत्रुमारित-म्लेच्छादिमारिताऽष्टशल्यामरण-वृक्षारोहण-वन्दिग्रहणपाशमरण-विशूचिका-भूत-शाकिनी-त्यादि-ग्रहगृह—शकटादिहत-गजदन्त-पर्वतारोहणादि-विकलचित्त-भ्रमविकृत्यात्तपाषाणहत-कुष्ठव्याधिमरण-महारोगप्रपीडित-क्षयव्याधिमरण-पापान्नपोषित-मूत्रपुरीषस्थाऽऽशौचमरणाऽपस्मार रोगादिभगन्दर-गण्डमाला-पाण्डुरोगाद्यनेकदुष्टमरणदोषमध्ये सम्भावितदोषपरिहारार्थं कुगतिनिवारणार्थमुत्तमलोकावाप्त्यर्थं नारायणबल्यधिकारसिद्ध्यर्थमतिकृच्छ्रचान्द्रायणद्वयम् अथवा पञ्चदश प्राजापत्यात्मक प्रायश्चित्तं प्रतिप्राजापत्यं धेन्वादिदानरूपं यथा कालेऽहमाऽऽचरिष्ये ॥ जपहोमतीर्थयोजनयात्रादि द्वारा वा कुर्यात् ॥ एवं ऊर्ध्वोच्छिष्टाधरोच्छिष्टोऽभयोच्छिष्टाऽस्पृश्यस्पृ-

इखट्वास्तरणादिस्थमरणे पञ्चदश द्वादश षट् त्रीन्वा प्राजापत्यान् कुर्यात् ॥

अथवा दूसरा संकल्प इस प्रकार से करे। कि अमुकगोत्र वाले अमुकप्रेत को सींग वाले, दाँतवाले, नह वाले, पशुओंसे अथवा शस्त्रसे, सर्प के काटने से जल में डूबने पर, फाँसी लगा कर, विषखाकर, अग्नि में जलकर, चाण्डाल के हाथसे, चोर से, शत्रु से, म्लेच्छ आदि से, अष्टशल्या से [अष्टशस्त्रादि], वृक्षसे गिर कर, वन्दीखाने में, फाँसी से, विशूचिका से, भूतशाकिनी डाकिनी आदि ग्रहों से, मकान में दबकर, गाड़ी के नीचे दबकर वा कटकर, हाथी के दांतों से, पर्वत से गिरकर, पागल होकर, भ्रम विकार से, पत्थर लगने से, कुष्ठ रोग से, महारोगों से पीडित होकर, क्षय रोग से, पापी के अन्नखाने से पुष्ट होकर, मूत्र विष्ठा में पड़ा रह कर और मृगीरोग आदि, भगन्दर, गण्डमाला, पाण्डुरोग आदि अनेक खराब रोगों से इन सब दोषों में से किसी में भी मृत्यु होवे तो इसको दूर करने के लिये, कुगति निवारण के लिये, उत्तम लोक प्राप्ति के लिये, और नारायण बलि के अधिकार के लिये, प्रति-

कृच्छ्र चान्द्रायण व्रत अथवा पन्द्रह प्राजापत्यात्मक प्रायश्चित के प्रति धेनु [ ब्याई गौ ] आदि दान या यथा काल में आचरण करना । जप [ गायत्री ], होम, तीर्थ यात्रा भोजन आदि द्वारा करें । इस प्रकार ऊर्ध्व उच्छिष्ट, अधर उच्छिष्ट दोनों स्थान उच्छिष्ट, अपृश्यका स्पर्श, खटिया आदि पर मरण होने पर पन्द्रह या बारह या छ प्राजापत्य करें ।

अथ प्रयोगः ।

आचम्य प्राणानायम्य ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः इत्यात्मानं पूजासामग्रीं च संप्रोक्ष्य ॥ पंचगव्यप्राशनम् ॥ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ॥ प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम् ॥ इति प्राश्याऽऽचम्य गोदानं कुर्यात् ॥ देशकालौ संकीर्त्य

अमुकगोत्रस्याऽमुकप्रेतस्याऽमुकदुर्मरणदोषपरिहारार्थं तथा रोगोत्पत्तिमरणावसाने ऊर्ध्वोच्छिष्टाऽधोच्छिष्ट-उभयोच्छिष्ट-अकृतस्नानमरणसमये म्लेच्छादिहस्तशस्त्रघातविषादिदोषान्यदुर्मरणजनितदोषनिवृत्त्यर्थं विष्णुलोकावाप्त्यर्थं दालभ्योक्तप्रायश्चित्तं नारायणबलिकर्माधिकारसिध्यर्थं च पंचदशगोनिष्क्रयीभूतं द्रव्यं यथानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे ॥ आचम्य ॥ पूर्वोच्चारित० अमुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणदोषपरिहारार्थं नारायणबलिं करिष्ये ॥ तत्र नारायणबलिपूर्वाङ्गभूतं श्रीमहाविष्णोः यथोपचारैः पूजनमहं करिष्ये ॥

आचमन प्राणायाम कर 'अपवित्रः' इससे अपने ऊपर और पूजन सामग्री पर जल छिड़क कर पवित्र

करै। बाद 'यत्त्वगस्थि' से पंचगव्य प्राशन करै। आचमन करके गोदान करै। देश काल का उच्चारण करके दुर्मरणके दोष हटाने के लिये, विष्णुलोक की प्राप्तिके वास्ते और नारायणवलि अधिकार सिद्धिके लिये पन्द्रह गौका मूल्य अनेक ब्राह्मणों को देने के लिये त्याग करते हैं, आचमन करके संकल्प करै कि अमुकगोत्रवाले प्रेत के दुर्मरण दोष की निवृत्ति के लिये नारायण वलि करते हैं। उस के अंग में सहस्रशीर्षा १६ मंत्रों से षोडशोपचार विष्णु का पूजन करते हैं।

तत्रादौ पुरुषसूक्तेन स्वशरीरे तथा देवाङ्गे एकतंत्रेण न्यासं कुर्यात् ॥ ॐ सहस्रशीर्षा० इति वामहस्ते ॥ ॐ पुरुष ऽएवेदꣳ इति दक्षिणहस्ते ॥ ॐ एतावानस्य० वामपादे ॥ ॐ त्रिपादूर्ध्व० दक्षिणपादे ॥ ॐ ततो विराड्० वामजानुनी ॥ ॐ तस्माद्यज्ञात्० दक्षिणजानुनी ॥ ॐ तस्माद्यज्ञा० वामकट्याम् ॥ ॐ तस्मादश्वा० दक्षि-

शाकल्याम् ॥ ॐ तं यज्ञं० नाभौ ॥ ॐ यत्पुरुषं० हृदये ॥ ॐ ब्राह्मणोस्य० कण्ठे ॥ ॐ चन्द्रमा मनसो० वामबाहौ ॥ ॐ नाभ्या आसी० दक्षिणबाहौ ॥ ॐ यत्पुरुषेण० मुखे ॥ ॐ सप्तास्यास० नेत्रयोः ॥ ॐ यज्ञेन यज्ञ० मूर्ध्नि ॥ ततः षोडशोपचारपूजा ॥ ॐ सहस्रशीर्षा० ॥ आगच्छ देवदेवेश ! संसारार्तिविनाशन ! ॥ पूजार्थं त्वं जगन्नाथ ! कुरु मे बहुधा कृपाम् ॥ आवाहनम् ॥ ॐ पुरुष ऽएवेद० ॥ नानारत्नमये दिव्ये सुनन्दाद्युपलक्षिते ॥ एहि त्वमासने विष्णो ! पट्टवस्त्रविभूषिते ! ॥ आसनम् ॥ २ ॥ ॐ एतावानस्य० ॥ वस्त्रं पूतं शुभं वारि शंखे कृत्वा जगद्गुरो । मया निवेदितो भक्त्या कुरु पाद्यं कृपां विभो ! ॥ पाद्यम् ॥३॥ ॐ त्रिपादूर्ध्वं० ॥

वनमालिन् ! जगन्नाथ ! शङ्खचक्रगदाधर ! ॥ रुक्मिणीसहितस्त्वं हि गृहाणार्घ्य-
मिदं हरे ! ॥ अर्घ्यम्॥४॥ॐ ततो विराड०॥भक्त्या समर्पितं देवं तुभ्यं मे परमात्मने॥
वासुदेवाय नित्याय गृहाणाचमनं विभो ! ॥ आचमनम् ॥५॥ ॐ तस्माद्यज्ञा० ॥
पुण्यतीर्थोदकेनाथ पंचामृतयुतेन वा ॥ चन्दनेनाभिमिश्रेण कुरु स्नानं जगत्पते ! ॥
स्नानं ६॥ ॐ तस्माद्यज्ञात्० ॥ शुभ्रं नानाविधं देव ! महार्घं दिव्यमद्भुतम् ॥
वस्त्रं गृहाण देवेश ! पवित्रं धौतमुज्ज्वलम् ॥ वस्त्रम् ॥७॥ ॐ तस्मादश्वा० ॥ नव-
तंतुकमेवेदं बाहुमूलोपरि स्थितम् ॥ भक्त्या समर्पितं तुभ्यमुपवीतं गृहाण वै ॥ यज्ञोपवी-
तम् ॥८॥ॐ तं यज्ञं०॥ श्रीखण्डं देवदेवेश ! सुगन्धमातिवल्लभम् ॥ गृहाण परमानन्द !

बहुमूल्यं सुकुङ्कुमम् ॥ गन्धं०॥९॥ ॐ यत्पुरुषं०'। बल्लभान्ते जगन्नाथ ! कोमलातिमनोहराम्॥ गृहाण तुलसीं विष्णो ! मया संतोषितो भुवि॥माल्यादीनि तुलसीपुष्पमाल्यम् ॥१०॥ ॐ ब्राह्मणोस्य० ॥ श्रीखण्डादि युतं दिव्यं कृष्णागुरुविमिश्रितम् ॥ भक्त्या समर्पितं धूपं गृहाण जगदीश्वर ! ॥ इति धूपम् ॥११॥ ॐ चन्द्रमा मनसो० ॥ घृतवर्त्तियुतं दिव्यं रत्नरूपं तमोपहम् ॥ भक्त्या समर्पितं तुभ्यं गृहाण पुरुषोत्तम ! ॥ इति दीपम् ॥१२॥ ॐ नाभा आसीदन्त० ॥ विपक्वं घृतदुग्धाभ्यां शर्करादियुतं महत् ॥ नानाविधन्तु नैवेद्यं गृहाण यदुनन्दन ! ॥ इति नैवेद्यम् ॥१३॥ ॐ यत्पुरुषेण० ॥ पुगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥ कर्पूरैलासमायुक्तं ताम्बूलं प्रति-

गृह्यताम् ॥ इति ताम्बूलम् ॥१४॥ ॐ हिरण्यगर्भः ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ इति दक्षिणाम् ॥१५॥ ॐ सप्तास्यान्परि० ॥ यानि कानि च पापानि ज्ञाताज्ञातकृतानि च ॥ तानि सर्वाणि नश्यन्ति प्रदक्षिण पदे पदे ॥ इति प्रदक्षिणाम् ॥१६॥ ॐ यज्ञेन यज्ञ० ॥ नाना-सुगन्धपुष्पाणि यथाकालोद्भवानि च ॥ पुष्पांजलिर्मया दत्तो गृहाण परमेश्वर ! ॥ इति पुष्पाञ्जलिम् ॥१७॥ साष्टाङ्गप्रणामः ॥ नमः सर्वहितार्थाय जगदाधारहेतवे ॥ साष्टाङ्गप्रणामस्ते दीनत्वेन मया कृतः ॥ इति नमस्कारः ॥१८॥ प्रार्थना ॥ आवाहनं न जानामि जानामि विसर्जनम् ॥ पूजां चैव न जानामि शरणं मे भवाऽच्युत ! ॥

इति प्रार्थना ॥ एतत्कृतं यद्विष्णुपूजनं तेन प्रेतस्य विमुक्तिरस्तु श्रीविष्णुः प्रीणातु ॥

उस के आदि में 'सहस्रशीर्षा १६ मन्त्रों से अपने अंग में और विष्णु में एक संग न्यास करता हूँ। न्यास कर के बाद विष्णु का पूजन करै। प्रार्थना करै। बाद अर्पण करै।

तत आचार्यादीनां वरणम् ॥ देशकालौ संकीर्त्य अमुकगोत्रस्यामुकप्रेतस्य दुर्मरणनिमित्तदोषनिवृत्तिपूर्वकौर्ध्वदेहिकसंप्रदानयोग्यतासिद्ध्यर्थं नारायणबलिकर्मणि सूक्तपाठकरणार्थं होमादिकर्म कर्तुं एभिर्वरणद्रव्यैरमुकामुकगोत्रानमुकामुकशर्मणो ब्राह्मणान् युष्मानहं वृणे ॥ वृताः स्मः ॥ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ॥ सुप्रसन्नैः प्रकर्त्तव्यं कर्मेदं विधिपूर्वकम् ॥ यथाज्ञानं करिष्यामः ॥ ततः

पूर्वस्योत्तरतः स्थण्डिले श्वेतवस्त्रं प्रसार्य तस्योपरि तण्डुलस्याष्टदलं कृत्वा तत्र पूर्वाद्यष्ट दिक्षु अष्टशक्तीनां स्थापनम्॥ तद्यथा॥ पूर्वे रुक्मिण्यै नमः रुक्मिणीमावाहयामि ॥१॥ आग्नेय्यां ॐ सत्यभामायै० सत्यभामां० ॥२॥ दक्षिणे ॐ जाम्बवत्यै० जाम्बवतीं० ॥३॥ नैर्ऋत्यां ॐ नाग्निक्यै० नाग्निकीं० ॥४॥ पश्चिमे ॐ कालिन्द्यै० कालिन्दीं० ॥५॥ वायव्ये ॐ मित्रविन्दायै० मित्रविन्दां० ॥६॥ उत्तरे ॐ लक्ष्मणायै० ॥ लक्ष्मणां० ॥७॥ ईशान्यां ॐ कैकेय्यै० कैकेयीमा० ॥८॥

आचार्यादिकका वरण करै, संकल्प सूक्तपाठ करै, प्रार्थना करै। उसके बाद वेदीपर अष्टदल बनावे। उसके ऊपर आठ शक्ति का पूजन करै।

तन्मध्ये ताम्रकलशं संस्थाप्य तस्योपरि सत्येशस्थापनम् ॥ तद्यथा ॥ ॐ मही द्यौरिति भूमिं स्पृष्ट्वा ॥ ॐ ओषधयरिति धान्यं विकिरेत् ॥ ॐ आजिघ्र कलशमिति कलशं स्थापयेत् ॥ वरुणस्योत्तम्भनमसीति कलशे जलं पूरयेत् ॥ ॐ त्वाँ गन्धर्वा० इति गंधं० ॥ या ऽओषधीरिति सर्वौषधीः ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती० दूर्वा-ङ्कुरान् ॥ ॐ अश्वत्थेवो० पंचपल्लवान् ॥ ॐ स्योना पृथिवी० सप्तमृत्तिका ॥ ॐ याः फलिनी० पूगीफलम् ॥ ॐ परिवाजपतिः० पंचरत्नं० ॥ ॐ हिरण्यगर्भः० हिरण्यं० ॥ ॐ सुजातो ज्योतिषा० ॥ युग्मवस्त्रेण कलशं वेष्टयेत् ॥ ॐ पूर्णादर्वि० पूर्णपात्रम् ॥ तस्योपरि सत्येशमूर्तिमग्न्युत्तारणपूर्वक स्थापयेत् ॥

कलशास्थापित करै, उस पर सत्येश की मूर्त्ति सुवर्णकी अग्न्युत्तारण मंत्रों से करके स्थापित करै।

अथाग्न्युत्तारणसूक्तम्॥ मूर्तिपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दद्यात् सूक्तं पठेत॥ ॐसमुद्रस्य त्वावकयाग्ने परिव्ययामासि॥ पावको ऽअस्मभ्यꣳ शिवो भव॥१॥ ॐ हिमस्य त्वा जरायुणाग्ने परिव्ययामसि॥ पावको०॥२॥ ॐ अपामिदं न्ययनꣳ समुद्रस्य निवेशनम्॥ अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव॥३॥ ॐ नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे॥ अन्याँस्ते अ०॥४॥ॐ प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः॥ अन्याँस्ते अस्म०॥५॥ इत्यग्न्युत्तरणम्॥ ततः पंचामृतेन संस्नाप्य (ॐ पंच नद्यः सरस्वतीमपि यन्ति

सस्रोतसः ॥ सरस्वती तु पञ्चधा सेदेशेऽभवत्सरित् ) स्थापितकलशोपरि संस्थाप्य ॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु ॥ विश्वे देवा स ऽइह मादयन्तामों प्रतिष्ठ अष्टौ शक्तिसहितः सत्येशः सुप्रातिष्ठितो वरदो भव ॥ उर्व्यां क्षीरसमुद्रेस्मिन् व्योम्नि सत्येशसंस्थिता ॥ अत्र त्वं सत्यया सार्द्धं सत्येश भव सन्निधौ॥ अष्टौ शक्तिसहिताय सत्येशाय नमः इत्यावाहनम् ॥१॥ सोमसूर्याग्निसंकाशं पद्ममष्टदलान्वितम् ॥ आसनं गृह्ण सत्येश ! त्रैलोक्यस्थिति-कारण ! इत्यासनम् ॥२॥ रत्नाभरणसर्वाङ्ग ! सर्वदेवनमस्कृत ! ॥ पाद्यं गृहाण देवेश ! गन्धपुष्पाक्षतैर्युतम् ॥ इति पाद्यम्॥३॥सत्येश ! सुखभूयिष्ठ ! सत्येश ! सुखदायक !

सत्येश ! सत्यया युक्त ! गृहाणार्घ्यं नमोऽस्तु ते ॥ इत्यर्घ्यम् ॥४॥ गंगाजलसमानीतं सुवर्ण-कलशे स्थितम् ॥ गृहाणाचमनं देव ! त्रैलोक्यस्यापि पावनम् ॥ इत्याचमनम् ॥५॥ क्षीरसागरकल्लोलैः स्नाहि पापनिषूदन ! ॥ पाहि मां भूतभव्येश ! शीतेन जलवि-न्दुना ॥ इति स्नानम् ॥६॥ हरस्व सर्वदुरितं येनाहं वेष्टितो हरे ! ॥ वस्त्रेणानेन शुभ्रेण सत्येश ! कुरु वाञ्छितम् ॥ इति वस्त्रम् ॥७॥ यज्ञे योगे तथा सांख्ये पवित्रस्त्वं सदो-च्यसे ॥ यज्ञोपवीतदानेन कुरु मां सर्वपावनम् ॥ इति यज्ञोपवीतम् ॥८॥ सुगन्धं चन्दनं दिव्यं केशरागरुसंयुतम् ॥ विलेपनं सुरश्रेष्ठ ! सर्वपापहरो भव ॥ इति चन्दनम् ॥९॥ सत्यनाम ! नमस्तुभ्यं मूर्तामूर्तस्वरूपिणे ! ॥ वासुदेव ! नृसिंहाख्य ! कपिला-

दित्य ! भूधर ! ॥ इति तुलसीं ॥ संकर्षण ! महावीर ! प्रद्युम्नामितविक्रम ! ॥ अनिरुद्धेश ! गोविन्द ! शार्ङ्गिश्चक्रिन् ! नमोऽस्तु ते ॥ वराहयुतयज्ञेश ! लक्ष्मीकान्तामृतेश्वर ! ॥ पुत्रपौत्रप्रदस्त्वं च पापशत्रो ! निरञ्जन ! ॥ इति पुष्पम् ॥१०॥ शक्तिवृन्दयुतो देव ! पूजाधूपं सुरेश्वर ! ॥ गृहाण त्वं तु सत्येश ! सत्यया सह रक्ष माम् ॥ इति धूपम् ॥११॥ ज्योतिरूपमरूपं त्वां वदन्ति मुनिपुङ्गवाः ॥ ज्योतिर्मध्ये स्थितो देव ! दीपं गृह्ण नमोऽस्तु ते ॥ इति दीपम् ॥१२॥ त्राता त्वमेव सत्येश ! सत्यया सह चिन्त्यसे ॥ गृहाण देवेदेवेश ! मम नैवेद्यमुत्तमम् ॥ इति नैवेद्यम् ॥१३॥ पूगीफलमहद्दिव्यं नागवल्लीदलैर्युतम् ॥ एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ इति

ताम्बूलम् ॥१४॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ दक्षिणाम् ॥१५॥ नारायण ! सुराधीश ! पुराणपुरुषोत्तम ! ॥ पापोपशमनार्थाय प्रीत्यर्थं प्रतिगृह्यताम् ॥ इति प्रदक्षिणाम् ॥१६॥ अनेकजन्मसम्भूतं पापं चैव सुरेश्वर ! ॥ मया दत्तार्घ्यदानेन भुक्तिमुक्तिप्रदो भव ॥इत्यर्घ्यम्॥१७॥ नारायण ! नमस्तेऽस्तु वासुदेव ! नमो नमः ॥ त्रैलोक्यजगदाधार ! त्राहि मां मधुसूदन ! ॥ इति नमस्कारः ॥१८॥ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ॥ त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ॥ इति आर्तिक्यम् ॥१९॥ नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च ॥ पुष्पांजलिर्मया दत्तो गृहाण परमेश्वर ॥ इति

पुष्पांजलिम् ॥२०॥ अग्नि ! रुद्रेश ! गोविन्द ! विष्णो ! चक्रिन् ! नमोऽस्तु ते ॥ पूजा गृहाण देवेश ! प्रीयतां गरुडध्वज ! ॥ इति प्रणामः ॥२१॥ ततः पूर्वोक्तानामष्टशक्तीनां पूजनम् ॥ अथ प्रार्थना ॥ अपराधसहस्राणि लक्षकोटियुतानि च ॥ नश्यन्ति तत्क्षणात्पापं सत्येशस्य च पूजनात् ॥ सत्येश ! पंचवक्त्रस्त्वं लक्ष्म्या सह जगत्पतिः ॥ वासुदेवः स्थितः पूर्वे नृसिंहो दक्षिणे स्थितः ॥ कपिलः पश्चिमास्ये तु वराहश्चोत्तरे स्थितः ॥ ऊर्ध्ववक्त्रेऽच्युतो ज्ञेयः एतद्वै ब्रह्मपंचकम् ॥ सत्येशसंस्थितं राजन्पूजाकाले सदैव हि ॥ क्षीरोदपाथे चन्द्रस्थपद्मकर्णिकसंस्थितम् ॥ पद्म-कौमोदकी-शंख-चक्रायस्त्राणि धारिणम् ॥ इति प्रार्थना ॥ अथ नालिकेरेणार्घ्यं दद्यात्॥

यज्ञेशाऽच्युत देवेश सत्यरूप सनातन ॥ अनेनार्घ्यप्रदानेन सर्वपापाद्वि-मोचय ॥ सत्येशाय नमस्तुभ्यं पापहा परमेश्वरः ॥ मया दत्तार्घ्यदानेन प्रेतमुक्तिप्रदो भव ॥ इत्यर्घ्यदानम् ॥ एतत्कृतं यत्सत्येशपूजनं तेन सत्येशः प्रीणातु ॥

शक्ति सहित पूजन करै। ऊपर लिखे हुए मंत्रों से प्रार्थना करै।

उसके बाद पंचभूसंस्कारपूर्वक अग्निस्थापन करै।

ततः अग्निस्थापनम् ॥ अद्य नारायणबलिहोमकर्मणि पंचभूसंस्कारपूर्वकम-ग्निस्थापनमहं करिष्ये ॥ तत्र कुशैर्हस्तपरिमितचतुरस्रभूमिं परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्य स्फ्येन स्रुवमूलेन वा प्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण

त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यां मृदं समुद्धृत्य वारिणा तं देशं अभ्युक्ष्य कांस्यपात्रस्थं वह्निं प्रत्यङ्मुखमुपसमाधाय ततोऽग्नेर्दक्षिणतः प्राक्संस्थं कलशस्थापनविधिना कलशान्संस्थाप्य तेषु कलशेषूपरि पंच मूर्तयः कृतपूर्वोक्ताग्न्युत्तारणाः पञ्चामृतस्नापिता प्रतिष्ठाप्यावाहनं कुर्यात् ॥

उसके बाद अग्निके दक्षिण तरफ पाँच कलश का स्थापन, पश्चिम से पूर्वतक पूर्व मुँह होकर करै, कलशस्थापन विधि से, उसके ऊपर ब्रह्मादि पंचमूर्ति को अग्न्युत्तारण करके, पाँचों मूर्ति पाँच कलश

१ ब्रह्मा रौप्यमयो देवो, विष्णुः स्वर्णमयः स्मृतः ॥ रुद्रस्ताम्रमयो देवो यमो लोहमयः स्मृतः ॥ प्रेतस्त्रपुमयः शुभ्रोऽथवा लोहमयः स्मृतः ॥ यद्वा कुशमयो ह्येते स्थाप्याश्चैव पृथक् पृथक् ॥

चाँदी के ब्रह्मा, सोने के विष्णु, ताँबे के रुद्र, लोहे के यम, सीसे के प्रेत, अथवा लोहे के प्रेत।

पर रखै। आवाहन के मंत्र मूल में लिखे हैं। बाद स्तुति करना।

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्॥ होतारं रत्नधातमम्॥ ॐ ब्रह्मयज्ञानं प्रथमम्पुरस्ताद्विशीमतः सुरुचो ऽवेन आवः॥ स बुध्न्या ऽउपमा ऽअस्य ऽविष्ठाः शतश्च योनिमसतश्च ऽविवः॥ॐ ब्रह्मणे नमः ब्रह्माणं आवाहयामि॥१॥ॐ इषे त्वोर्ज्जे त्वा ऽवायवस्थ देवो वः सविता प्प्रार्प्पयतु श्रेष्ठतमाय कर्म्मण ऽआप्यायध्वमघ्न्या ऽइन्द्राय भाग म्प्रजावतीरनमी वा ऽ अयक्ष्मा मावस्तेन ईशत माघशꣳ सोद्ध्रुवा ऽअस्मिन्गोपतौ स्यात वह्वीर्य्यजमानस्य पशून्पाहि॥ ॐ इदं ऽविष्णुर्विचक्क्रमे त्रेधा निदधे पदम्॥ समूढमस्य पाꣳसुरे॥ ॐ विष्णवे नमः विष्णुमावाहयामि॥२॥

ॐ अग्न ऽआयाहि वीतये गृणानो हव्यदातये ॥ निहोता सत्सि बर्हिषि ॥ ॐ नमस्ते रुद्रमन्यव ऽउतोत ऽइषवे नमः ॥ बाहुभ्यामुत ते नमः ॥ ॐ रुद्राय नमः रुद्रमावाहयामि ॥३॥ ॐ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये ॥ शँ य्योरभिस्रवन्तु नः ॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ यमाय० यममा० ॥४॥ ॐ अक्रन्कर्म्म कर्म्मकृतः सहवाचामयो भुवा ॥ देवेभ्यः कर्म्म कृत्वास्तम्प्रेतसचा भुवः ॥ ॐ प्रेताजयता नर ऽइन्द्रो वः शर्म्म यच्छतु ॥ उग्रा वः सन्तु बाहवो नाधृष्या यथासथ ॥ अपसव्यम् ॥ अमुकगोत्रामुकप्रेतविष्णुरूपाय प्रेताय नमः प्रेतमावाहयामि ॥५॥ एवं पञ्चदेवतानां स्थापनं कृत्वा ॥ ॐ मनो

ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु ॥ विश्वे देवास ऽइह मादयन्तामों प्रतिष्ठेति प्रतिष्ठाप्य ॥ ततो ब्रह्मादिचतुष्टयदेवतानां सव्येन प्रेतस्यापसव्येन प्रत्येकं सम्पूज्य ॥ एतत्कृतं यद्ब्रह्मादिपञ्चदेवतानां पूजनं तेन ब्रह्मादयः प्रीणातु न्यूनं सम्पूर्णमस्तु ॥ ततो विष्णुं स्तुवीत ॥ जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तुभ्यं हृषीकेश महापुरुषपूर्वज ॥ अनादिनिधनो-देव शङ्खचक्रगदाधर ॥ अक्षयः पुण्डरीकाक्ष प्रेतमोक्षप्रदो भव ॥ इति स्तुत्वा॥

इसके बाद कुशकण्डिका करना ॥ आगे लिखे हुए मंत्रों से हवन करै ।

ततो ब्रह्मवरणम् ॥ अद्य कर्तव्यनारायणबलिहोमकर्मणि कृताकृतावेक्षणरूप-

ब्रह्मकर्म कर्तुममुकगोत्रममुकशर्माणं ब्राह्मणमेभिः पुष्पचन्दनताम्बूलवासोभिः ब्रह्मत्वेन त्वामहं वृणे ॥ वृतोऽस्मि ॥ अग्नेर्दक्षिणतः शुद्धमासनं निधाय तदुपरि प्रागग्रान्कुशानास्तीर्य अग्निं प्रदक्षिणं कारयित्वा ब्रह्माणमुदङ्मुखं तत्रोपविश्यास्मिन्नारायणबलिकर्मणि त्वं मे ब्रह्मा भव ॥ भवामि तेन वाच्यम् ॥ अग्नेरुत्तरतः प्रणीतासनद्वयम्॥ प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य प्रथमासने निधाय ब्रह्मणो मुखमवलोक्य द्वितीयासने निधाय ॥ ततः परिस्तरणं बर्हिषश्चतुर्थभागमादायआग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्यन्तं नैर्ॠत्याद्वायव्यान्तं अग्नितः प्रणीतापर्यन्तम् ॥ ततः पात्रासादनम् ॥ अग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्र-

यम्॥ पवित्रार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयम् ॥प्रोक्षणीपात्रम् ॥ आज्यस्थाली ॥ चरु-
स्थाली ॥ सम्मार्जनकुशाः पंच ॥ उपमनकुशाः सप्त ॥ समिधस्तिस्रः॥ स्रुवः ॥आज्यम्
षट्पंचाशदुत्तरयजमानमुष्टि शतद्वयावच्छिन्नामतण्डुलपूर्णपात्रम्। चर्वर्थं तण्डुलाः॥
एतानि पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेणासादनीयानि ॥ ततः
पवित्रच्छेदनकुशैः यजमानप्रादेशमितपवित्रछेदनं सपवित्रकरेण प्रणीतोदकं त्रिः
प्रोक्षणीपात्रे निधाय द्वाभ्यां अनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे धृत्वा त्रिरुत्पवनं
ततः प्रोक्षणीपात्रं वामहस्ते कृत्वा दक्षिणानामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दि-
ङ्गनम् ॥ ततः प्रणीतोदकेन प्रोक्षणीप्रोक्षणम् ॥ प्रोक्षणीजलेन यथासादितवस्तु-

सेचनम् ॥ अग्निप्रणीतयोर्मध्ये प्रोक्षणीर्निधाय ॥ आज्यस्थाल्यामाज्यं निरूप्य प्रणीतोदकेन तण्डुलान्प्रक्षाल्य चरोः स्थाल्यां प्रणीतोदकं दत्त्वा तण्डुलान्प्राक्षिप्य॥ अग्नेरुपरि ब्रह्मा दक्षिणतः आज्याधिश्रयणं आज्यस्योत्तरतः स्वयं चरुं श्रपयेत ॥ ततः सिद्धे चरौ तृणं प्रज्वाल्य उभयोरुपरि प्रदक्षिणं भ्रामयित्वा वह्नौ तत्प्रक्षेपः ॥ ततस्त्रिः स्रुवप्रतपनम् ॥ सम्मार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं सम्मार्ज्य प्रणीतोदकेनाभ्युक्ष्य पुनस्त्रिः प्रतप्य दक्षिणतो निदध्यात् ॥ तत आज्यमग्नितश्चरोः पूर्वेणानीयाग्रे धृत्वा आज्यात्पश्चिमेनानीय चरुं आज्यस्योत्तरतः स्थापयेत् ॥ तत आज्यस्य प्रोक्षणीवत् त्रिरुत्पवनम् ॥ अवेक्ष्य सत्यपद्रव्ये तन्निर-

सनं ततः प्रोक्षण्युत्पवनम् ॥ तत उत्थाय उपयमनकुशान्वामहस्ते कृत्वा प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्तसमिधः प्रक्षिपेत् ॥ तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य ॥ प्रणीतापात्रे पवित्रे निधाय ब्रह्मणान्वारब्धः पातितदक्षिणजानुः समिद्धतमेऽग्नौ जुहुयात तत्र प्रथमाहुति चतुष्टये तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ॥ ॐ प्रजापतये स्वाहा उत्तरपूर्वार्द्धे इदं प्रजापतये न मम इति त्यागं विधाय मनस्येव प्रजापतिहोमः ॥ ॐ इन्द्राय स्वाहा इदमिन्द्राय० दक्षिणपूर्वार्द्धे इत्याघारौ ॥ ॐ अग्नये स्वाहा अग्नेः उत्तरतः इदमग्नये० ॥ ॐ सोमाय स्वाहा अग्नेर्दक्षिणतः इदं सोमाय न मम इत्याज्य-

भागौ ॥ अथ प्रधानहोमः ॥ ॐ युञ्जते मन ऽउत युञ्जते धियो व्विप्पा व्विप्रस्य बृहतो व्विपश्चितः॥ व्विहोत्रा दधे व्वयुनाविदेक ऽइन्न्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥ इदं विष्णवे० ॥१॥ ॐ इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्॥समूढ-मस्य पा ᳪ सुरे स्वाहा ॥ इदं विष्णवे० ॥२॥ ॐ इरावती धेनुमती हि भूतᳩ सूय-वसिनीमनवेदशस्या॥ व्व्यस्कभ्न्ना रोदसी व्विष्ष्णवे ते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहा ॥ इदं विष्णवे इति सर्वत्रत्यागः ॥३॥ ॐ देवश्श्रुतौ देवेष्वा घोष तम्प्राचीप्प्रेत-मद्ध्वरङ्कल्पयन्ती ऽऊद्ध्र्वं यज्ञं नयतम्मा जिह्वरतम्॥ स्वगोष्ठमावद तन्देवीदुर्य्ये आयुर्म्मा निर्व्वादिष्टम्प्रजाम्मा निर्व्वादिष्टमत्र रमेथां व्वर्ष्मन्न्पृथिव्याः स्वाहा॥४॥ ॐ विष्णोर्नु

कं व्वीर्य्याणि प्रवोचं य्यः पार्थिवानि व्विममे रजाᳪसि ॥ यो ऽअस्कभायदुत्तरᳫ सधस्थं व्विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा स्वाहा ॥ ५ ॥ ॐ दिवो वा व्विष्ण ऽउत वा पृथिव्यामहो वा विष्ण ऽउरोरन्तरिक्षात् ॥ उभा हि हस्ता व्वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा स्वाहा ॥६॥ ॐ प्रतद्विष्णु स्तवते व्वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु व्विक्रमणेष्वधिक्षियन्ति भुवनानि व्विश्श्वा स्वाहा॥७॥ॐ व्विष्णो रराटमसि व्विष्णोः श्नप्त्रेस्थो व्विष्णोः स्यूरसि व्विष्णो र्ध्रुवोसि व्वैष्णवमसि व्विष्णवे त्वा स्वाहा॥८॥ ॐ लोमभ्यः स्वाहा १॥ लोमभ्यः स्वाहाः ॥२॥ ॐ त्वचे स्वाहा ॥३॥ त्वचे स्वाहा ॥४॥ ॐ लोहिताय स्वाहा ॥५॥

लोहिताय स्वाहा ॥ ६ ॥ ॐ मेदोभ्यः स्वाहा ॥ ७ ॥ मेदोभ्यः स्वाहा ॥ ८ ॥ ॐ माᳬसेभ्यः स्वाहा ॥ ९ ॥ माᳬसेभ्यः स्वाहा ॥ १० ॥ ॐ स्नावभ्यः स्वाहा ॥ ११ ॥ स्नावभ्यः स्वाहा ॥ १२ ॥ ॐ स्थभ्यः स्वाहा ॥ १३ ॥ स्थभ्यः स्वाहा ॥१४॥ ॐमजभ्यः स्वाहा ॥ १५ ॥ मजभ्यः स्वाहा ॥ १६ ॥ इति षोडशाज्याहुतयः ॥ ॐ रेतसे स्वाहा ॥१॥ ॐ पायवे स्वाहा ॥ २ ॥ ॐ आयासाय स्वाहा ॥३॥ ॐप्रायासाय स्वाहा ॥४॥ ॐ संयासाय स्वाहा ॥५॥ ॐ वियासाय स्वाहा ॥६॥ ॐ उद्यासाय स्वाहा ॥७॥ ॐ शुचे स्वाहा ॥८॥ ॐ शोचते स्वाहा ॥ ९ ॥ ॐ शोचमानाय स्वाहा ॥१०॥ शोकाय स्वाहा ॥११॥ ॐ तपसे स्वाहा ॥१२॥ ॐ तप्यते

स्वाहा ॥१३॥ ॐ तप्यमानाय स्वाहा ॥१४। ॐ तप्ताय स्वाहा ॥१५॥ ॐ घर्माय स्वाहा ॥१६॥ ॐ निष्कृत्यै स्वाहा ॥१७॥ ॐ प्रायश्चित्यै स्वाहा ॥१८॥ ॐ भेषजाय स्वाहा ॥१९॥ ॐ यमाय स्वाहा ॥२०॥ ॐ अन्तकाय स्वाहा ॥२१॥ ॐ मृत्यवे स्वाहा ॥२२॥ ॐ ब्रह्मणे स्वाहा ॥२३॥ ॐ ब्रह्महत्यायै स्वाहा ॥२४॥ ॐ विश्वेभ्यो देवेभ्यः स्वाहा ॥२५॥ ॐ द्यावापृथिवीभ्याᳬं स्वाहा ॥२६॥ इति मन्त्रैराज्यं हुत्वा यथामंत्रत्यागः ॥

ततः पुरुषसूक्तेन षोडशाहुतिर्हुत्वा ॥ ॐसहस्रशीर्षा० स्वाहा॥ इदं विष्णवे न मम ॥१॥ इति त्यागः सर्वत्र ॐ पुरुषऽएवेदᳬं सर्वं० स्वाहा ॥२॥ ॐ एतावानस्य० स्वाहा

॥३॥ ॐ त्रिपादूर्ध्वं० स्वाहा ॥४॥ ॐ ततो विराड० स्वाहा ॥५॥ ॐ तस्मादज्ञात्सर्वहुतः संभृतं० स्वाहा॥६॥ ॐ तस्माद्यज्ञात्सर्वहुत ऋचः स्वाहा ॥७॥ ॐ तस्मादश्वा० स्वाहा ॥८॥ ॐ तं यज्ञं० स्वाहा ॥९॥ ॐ यत्पुरुषं० स्वाहा ॥१०॥ ॐ ब्राह्मणोस्य० स्वाहा ॥११॥ ॐ चंद्रमा० स्वाहा॥१२॥ ॐ नाभ्या ऽआसी० स्वाहा॥१३॥ ॐ यत्पुरुषेण० स्वाहा ॥१४॥ ॐ सप्तास्यासन्० स्वाहा ॥१५॥ ॐ यज्ञेन यज्ञ० स्वाहा ॥१६॥

घी की आहुति के वाद पुरुषसूक्त सहस्र शीर्षा १६ मंत्रों से सोलह आहुति चरु को देवे।

अथ घृताक्तपायसचरुहोमः ॥ ॐ इदं विष्णु० स्वाहा इदं विष्णवे० ॥१॥ ॐ

अपो देवा मधुमतीरगृभ्णांन्नूर्जस्वती राजस्वृश्चितांनाः ॥ याभिर्म्मित्राव्वरुणा वृभ्यषिञ्चन्न्याभिरिन्द्रमनंयन्नत्यरातीः स्वाहा ॥ इदं वि० ॥२॥ ॐ प्रपर्व्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसि च ऽइयानाः ॥ ताऽ आवंवृत्रन्नधरा गुदक्ता अहिम्बुध्न्यमनुरीयमाणाः ॥ व्विष्णोर्व्विक्रमणमसि व्विष्णोर्व्विक्रान्तमसि व्विष्णोः क्रान्तमसि स्वाहा ॥ इदं वि० ॥३॥ ॐ व्विष्णोर्नु कं व्वीर्य्याणि प्रवोचं यः पार्थिवानि व्विममे रजांᳬसि ॥ यो ऽअस्कभायदुत्तरᳬ सधस्थं व्विचक्रमाणस्त्रेधोरुगायो व्विष्णवे त्वा स्वाहा ॥ इदं विष्ण० ॥४॥ ॐ दिवो वा व्विष्ण ऽउत वा पृथिव्व्या महो वा व्विष्ण ऽउरोरन्तरिक्षात ॥ उभा हि हस्ता व्वसुना पृणस्व प्रयच्छ

दक्षिणादोत सव्याद्विष्णवे त्वा स्वाहा ॥ इदं वि० ॥५॥ ॐ प्रतद्विष्णुः स्तवते व्वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु व्विक्क्रमणेष्ष्वधि क्षियन्ति भुवनानि व्विश्वा स्वाहा॥ इदं वि० ॥६॥ ॐ व्विष्णो रराटमसि व्विष्णोः श्नप्त्रेस्थो व्विष्णोः स्यूरसि व्विष्णोर्ध्रुवोसि॥ व्वैष्णवमसि व्विष्णवे त्वा स्वाहा ॥ इदं विष्णवे० ॥७॥ ॐ तद्विप्रासो व्विपन्यवो जागृवा॒ᳬसः समिन्धते ॥ व्विष्णो-र्य्यत्परमम्पदᳬ स्वाहा ॥ इदं वि० ॥८॥ ॐ व्विष्णोः कर्म्माणि पश्यत यतो व्व्रतानि पस्पशे ॥ इन्द्रस्य युज्ज्यः सखा स्वाहा ॥ इदं वि० ॥९॥ ॐ तद्विष्णोः परम-म्पदᳫ सदा पश्यन्ति सूरयः॥ दिवीव चक्षुराततं स्वाहा॥ इदं विष्णवे न मम॥१०॥

ॐ अद्भ्यः सम्भृतः० स्वाहा ॥ इदं वि० ॥११॥ ॐ वेदाहमेतम्पुरुषं० स्वाहा ॥ इदं वि० ॥१२॥ ॐ प्रजापतिश्चरति० स्वाहा ॥ इदं वि० ॥१३॥ ॐ यो देवेभ्य० स्वाहा॥ इदं वि० ॥१४॥ ॐ रुचं ब्राह्मञ्जनयन्तो० स्वाहा ॥ इदं वि० ॥१५॥ ॐ श्रीश्च ते० स्वाहा ॥ इदं विष्णवे न मम ॥१६॥ इति षोडश चर्वाहुतीः ॥ ततो घृताक्ततिलयवशर्करामिश्रितैर्जुहुयात् ॥ ॐ तद्विप्रासो व्विपन्यवो जागृवाꣳसः समिन्धते ॥ व्विष्णोर्यत्परम म्पदꣳ स्वाहा ॥ इदं विष्णवे० ॥ इति मंत्रेणाष्टोत्तरशतं जुहुयात् ॥ ततः सर्वान्देवान् पुनः सम्पूज्य ॥ तत आज्यस्थालीपाकाभ्यां ततो ब्रह्मणान्वारब्धः ॥ ॐ अग्नये स्विष्टकृते स्वाहा ॥ इदमग्नये स्विष्टकृते न मम इति आज्य-

चरुशेषं च हुत्वा ॥ ततः आज्येन ॥ ॐ भूः स्वाहा ॥ इदमग्नये० ॥१॥ ॐ भुवः स्वाहा ॥ इदं वायवे० ॥२॥ ॐ स्वः स्वाहा इदं सूर्याय० ॥३॥ ॐ त्वन्नो ऽअग्ने० स्वाहा ॥ इदमग्नीवरुणाभ्यां ॥४॥ ॐ सत्वन्नो ऽअग्ने० स्वाहा ॥ इदमग्नीवरुणाभ्यां० ॥५॥ ॐ अयाश्चाग्ने० स्वाहा ॥ इदमग्नये० ॥६। ॐ ये ते शतं० स्वाहा ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० ॥७॥ ॐ उदुत्तमं० स्वाहा इदं वरुणायादित्यायादितये० ॥८॥ ॐ प्रजापतये स्वाहा ॥ इदं प्रजापतये० ॥९॥ इति नवाहुतयः ॥ ततो दिक्पालेभ्यो दधिमाषबलिं दद्यात ॥ इन्द्रादि दशदिक्पालेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतान् दधिमाष-

बलीन् समर्पयामि ॥ भो भो इन्द्रादिदशदिक्पालाः० ॥ अनेन बलिदानेन० प्रीयन्ताम् ॥

तिल यव शर्करा घी मिले हुए से १० आहुति विष्णु को देकर स्विष्टकृत् नव आहुति बलि देवे।

अथ पूर्णाहुतिः ॥ ॐ मूर्द्धानन्दिवो ऽअरतिं पृथिव्या वैश्वानरमृत ऽआजातमग्निम् ॥ कविꣳ सम्म्राजमतिथिञ्जनानामासन्नापात्रं जनयन्त देवाः ॥१॥ ॐ स्वाहा प्राणेभ्यः साधिपतिकेभ्यः ॥ पृथिव्यै स्वाहा ऽग्नये स्वाहाऽन्तरिक्षाय स्वाहा वायवे स्वाहा ॥ दिवे स्वाहा सूर्य्याय स्वाहा ॥२॥ दिग्भ्यः स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहा ऽद्भ्यः स्वाहा वरुणाय स्वाहा ॥ नाभ्यै स्वाहा पूताय स्वाहा ॥३॥ वाचे स्वाहा प्राणाय स्वाहा प्राणाय स्वाहा ॥ चक्षुषे स्वाहा

चक्षुषे स्वाहा ॥ श्रोत्राय स्वाहा श्रोत्राय स्वाहा ॥४॥ ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत ॥ व्वस्नेव व्विक्क्रीणावहा ऽइषमूर्जँ शतक्रतो स्वाहा ॥ इदं मृडाग्नये न मम ॥ इति पूर्णाहुतिः ॥ स्रुवेण भस्मानीय ॥ ॐ त्र्यायुषं जमदग्ने-रिति ललाटे ॥ ॐ कश्यपस्य त्र्यायुषमिति ग्रीवायां ॥ ॐ यद्देवेषु त्र्यायुषमिति दक्षिणांसे ॥ ॐ तन्नो ऽअस्तु त्र्यायुषमिति हृदये ॥ इति त्र्यायुषं कुर्यात ॥ संस्र-वप्राशनम् ॥ आचम्य ॥ अद्य कृतैतन्नारायणिबलिहोमकर्मणि कृताकृतावेक्षण-रूपब्रह्मकर्मप्रतिष्ठार्थं इदं पूर्णपात्रं प्रजापतिदैवतं अमुकगोत्रायाऽमुकशर्मणे ब्राह्मणाय ब्रह्मणे दक्षिणां तुभ्यमहं सम्प्रददे ॥ ॐ स्वस्ति ब्रह्मा वदेत ॥ ततः प्रणीतोदकेन

पवित्राभ्यां ॐ सुमित्रिया न ऽआप ऽओषधयः सन्त्विति मार्जनम् ॥ ॐ दुर्मित्रिया-स्तस्यै सन्तु योस्मान्द्वेष्टि यञ्च व्वयं द्विष्म इति ऐशान्यां दिशि प्रणीता न्युब्जीकुर्यात् ॥ ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥ इति उपयमनकुशैर्मार्जयेत् ॥ उपयमनकुशानामग्नौ प्रक्षेपः ॥ ॐ देवागातु व्विदो गातुं वित्वा गातुमित ॥ मनसस्पत इमं देवयज्ञꣳ स्वाहा वातेधाः ॥ इति बर्हिर्होमः ॥ अद्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तकनारायणबलिहवनकर्मणः सांगता-सिध्यर्थं यथासम्पन्नेनान्नेन यथासंख्याकान् ब्राह्मणान् एकं वा भोजयिष्ये ॥ विप्रान् सम्भोज्य आमान्नदक्षिणां वा दद्यात ॥ तेन श्रीविष्णुः प्रीयताम् ॥

आचम्य ॥ अद्यामुकगोत्रस्यामुकप्रेतस्याऽमुकदुर्मरणनिमित्तकनारायणबलिपूर्वाङ्गभूतं परलोके महत्तृषानिवारणार्थं वैष्णवैः सूक्तैराद्यन्तयोः पुराणश्लोकत्रयावृत्या विष्णोरुपरि विष्णुतर्पणमहं करिष्ये॥जलतिलदुग्धयवसर्वौषधीतुलसीदलमिश्रोदकेन शङ्खेन तर्पणं कुर्यात् सव्येनैव ॥

बाद पूर्णाहुति करै। त्र्यायुष करै (भस्मवंदन) पूर्णपात्र दान संकल्प पूर्वक करै। अग्नि के पश्चिम प्रणीता उलट कर उपयमन कुशा से गिरा हुआ जल से मार्जन करै बाद 'देवागातु' इससे वर्हि होम करै। ब्राह्मणभोजन का संकल्प करै। बाद विष्णु को अर्पण करै, बाद आचमन करके तर्पण के लिये संकल्प करै, बाद विष्णु के ऊपर विष्णुसूक्त इत्यादि से सर्वोषधी इत्यादि मिश्रित जल शंख से तर्पण आगे लिखे मंत्रों व श्लोकों से करै।

अनादिनिधनो देवः शङ्खचक्रगदाधरः ॥ अव्ययः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भव ॥ १ ॥ अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ २ ॥ कृष्ण कृष्ण कृपालो त्वमगतीनां गतिर्भव ॥ संसारार्णवमग्नानां प्रसीद पुरुषोत्तम ! ॥ ३ ॥ नारायण सुरश्रेष्ठ लक्ष्मीकान्त जनार्दन ॥ अनेन तर्पणेनाथ प्रेतमोक्षप्रदो भव ॥४॥ ॐ सहस्रशीर्षाषोडशमंत्रान्पठनान्ते अनादिनिधनश्चतुःश्लोकं पठनान्ते तर्पणम् ॥ ५ ॥

ॐ युञ्जते मनं ऽउत युञ्जते धियो व्विप्रा व्विप्रस्य बृहतो व्विपश्चितं÷ ॥ व्विहोत्रां दधे वयुना व्विदेक ऽइन्न्मही देवस्य सवितु॒ परिष्टुतिः स्वाहा ॥१॥ ॐ इदं

विष्णु० स्वाहा ॥२॥ ॐ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवेदशस्या ॥ व्यस्कब्भ्ना रोदसी विष्णावे ते दाधर्त्थं पृथिवीमभितो मयूखैः स्वाहा ॥३॥ ॐ देवश्रुतौ देवेष्वाघोषतम्प्राचीप्रेतं मदध्वरङ्कल्पयन्ती ऊर्द्ध्वं यज्ञं न्नयतम्मा जिह्वरतम् ॥ स्वङ्गोष्ठ मावदतन्देवी दुर्य्येऽ आयुर्म्मा निर्व्वादिष्टम्प्रजाम्मा निर्व्वादिष्टमत्र रमेथां वर्ष्मन्पृथिव्याः स्वाहा ॥४॥ ॐ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि ॥ यो ऽअस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा स्वाहा ॥५॥ ॐ दिवो वा विष्णऽउत वा पृथिव्या महो वा विष्णा ऽउरोरन्तरिक्षात् ॥ उभा हि हस्ता वसुना पृणस्वाप्रयच्छ दक्षि-

णादोत सर्व्याद्द्विष्णवे त्वा स्वाहा॥६॥प्रतद्विष्णुः स्तवते व्वीर्य्येण मृगो न भीमः
कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्क्रमणेष्वधिक्षियन्ति भुवनानि विश्वा
स्वाहा ॥७॥ ॐ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णो-
र्ध्रुवोसि व्वैष्णवमसि विष्णवे त्वा स्वाहा ॥ ८ ॥ अनादिनिधनो देव० ॥४ ॥ २ ॥
ॐ युजेवां ब्रह्मपूर्व्यन्नमोभिर्विश्लोक ऽ एतु पथ्येव सूरेः ॥ शृण्वन्तु विश्वे ऽअ-
मृतस्य पुत्राऽआयेधामानिदिव्यानि तस्थुः ॥ १ ॥ ॐ यस्य प्प्रयाणमन्वन्य
ऽइद्ययुर्देवा देवस्य महिमानमोजसा ॥ यः पार्थिवानि विममे स ऽएतशो रजांऽसि
देवः सविता महित्वना ॥ २ ॥ ॐ देव सवितः प्प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥

द्दिव्व्यो गन्धर्व्वः केतपूः केतन्नः पुनातु व्वाचस्पतिर्व्वाचन्नः स्वदतु ॥ ३ ॥ ॐ इमन्नो देवसवितर्य्यज्ञम्प्रणायदेवा व्यᳯ सखिविदᳯ सत्राजितन्धनजितᳯ स्वर्जितम् ॥ ऋचास्तोमᳯ समर्द्धय गायत्रेण रथन्तरम्बृहद्गायत्रावर्तनि स्वाहा ॥४॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्व्वाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आददे गायत्रेणच्छन्दसाऽङ्गिरस्वत्पृथिव्व्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभरत्रैष्टुभेनच्छन्दसाङ्गिरस्वत॥५॥ ॐ अभ्रिरसिनार्य्यसि त्वया व्वयमग्निᳯ शकेम खनितुᳯ सधस्थ आ॥जागतेनच्छन्दसाऽङ्गिरस्वत॥६॥ॐ हस्त ऽआधाय सविता व्विभ्रदभ्रिᳯहिरण्ययीम् ॥ अग्ने ज्ज्योतिर्न्निचाय्य पृथिव्व्या ऽअद्ध्याभरदानुष्टुभेन च्छन्दसाङ्गिरस्वत् ॥ ७ ॥ ॐ विष्णोः

कर्म्माणि पश्यत यतो व्व्रतानि पस्पशे ॥ इन्द्रस्य युज्ज्यः सखा ॥ ८ ॥ ॐ तद्वि-
ष्णोःपरमम्पदꣳ सदा पश्यन्ति सूरयः ॥ दिवीवचक्षुराततम् ॥ ९ ॥ अनादिनिधनो
देवः० ( श्लोकः ४ ) ॥३॥ ॐ रक्षोहणं व्वलगहनं व्वैष्णवीमिदमहन्तं व्वलगमु-
त्किरामि यम्मेनिष्ट्यो यममात्यो निचखानेदमहन्तं व्वलगमुत्किरामियम्मे समानो
यमसमानो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सबन्धुर्य्यमसबन्धुर्न्निचखाने-
दमहन्तं व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥१॥
ॐ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्व्वराडस्य मित्रहा
॥२॥ ॐ दिवि व्विष्णुर्व्यक्रꣳस्त जागतेनच्छन्दसाततो निर्भक्तो योस्मान्द्वेष्टि

यश्च व्वयं द्विष्मो ऽन्तरिक्षे व्विष्णुर्व्व्यक्रᳪस्त त्रैष्टुभेन च्छन्दसा ततो निर्भक्तो यो-
स्मान्द्वेष्टि यश्च व्वयंद्विष्मः पृथिव्व्यां व्विष्णुर्व्व्यक्रᳪस्त गायत्रेण च्छन्दसा ततो
निर्भक्तो योस्मान्द्वेष्टि यञ्च व्वयं द्विष्मो स्म्मदन्नादस्यै प्प्रतिष्ठाया ऽअगन्म-
स्वः सञ्ज्योतिषा भूम ॥३॥ ॐ प्रेताजयंतानर ऽइन्द्रो वः शर्म्म यच्छतु ॥ उग्रा वः
सन्तु बाहवो ना धृष्या यथासथ ॥४॥ ॐ अश्वस्तूपरो गो मृगस्ते प्प्राजापत्याः कृष्ण-
ग्रीव ऽआग्नेयो रराटे पुरस्तात्सारस्वतीमेष्ष्यधस्ताद्धन्न्वो राश्विना वधोरामौ बाह्वोः
सौमा पौष्णाः श्यामो नाभ्याᳪ सौर्य्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोस्त्वाष्ट्रौ
लोमश सक्वथौ सक्थ्यो र्व्वायव्यः श्वेतः पुच्छ ऽइन्द्राय स्वपस्याय व्वेहद्वैष्णवो व्वा-

मनः॥५॥ ॐ व्विष्णोः क्रमोसि सपत्नहा गायत्त्रं च्छन्द ऽआरोह पृथिवीमनु व्विक्रमस्व व्विष्णोः क्रमोस्यभिमातिहा त्त्रैष्टुभञ्छन्दऽआरोहान्तरिक्षमनुविक्रमस्व व्विष्णोःक्रमोस्यरातीयतो हन्ता जागतञ्छन्द ऽआरोह दिवमनु व्विक्क्रमस्व व्विष्णोः क्रमोसि शत्रूयतो हन्तानुष्टुभञ्छन्द ऽआरोह दिशो नु व्विक्रमस्व ॥६॥ ॐ सा व्विश्वायुः सा व्विश्वकर्म्मा सा व्विश्श्वधायाः॥ इन्द्रस्यत्त्वा भागꣳ सोमेनातनच्मि व्विष्णो हव्यꣳ रक्ष ॐ अहुतमसि हविर्द्धानन्दृ नꣳ हस्व माऽह्मर्मातें यज्ञपतिर्ह्वार्षीत ॥ विष्णुस्त्वा क्रमतामुरुव्वातायापं हतꣳ रक्षो यच्छन्ता म्पञ्च ॥८॥ ॐ मीढुष्टमशिवतमाशिवो नꣳसुमनाभव ॥परमेव्वृक्ष ऽआयुधन्निधाय कृत्तिं व्वसान ऽआचर पिनाक व्विभ्रदागहि ॥९॥

ॐ त्रीणि पदा व्विचक्रमे व्विष्णुर्गोपा ऽअदाभ्यः॥ अतो धर्म्माणि धारयन् ॥१०॥ ॐ तद्विप्रासो व्विपन्यवो जागृवाꣳसः समिन्धते॥ व्विष्णोर्यत्परमम्पदम् ॥११॥ ॐ व्विश्श्वे देवास ऽआगत शृणुतामं ऽइमꣳ हवम् ॥ एदम्बर्हिन्निषीदत ॥१२॥ ॐ उपयाम गृहीतो स्यादित्ये भ्यस्त्वा ॥ व्विष्णो ऽउरुगायैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ॥१३॥ ॐ उरु विष्णोव्विक्क्रमस्वोरुक्षयाय नस्कृधि ॥ घृतङ्घृतयोने पिवप्रप्र-यज्ञपतिन्तिर स्वाहा ॥१४॥ अनादिनिधनो देवः ( श्लोकः ४ ) ॥ एतत्कृतं यद्वि-ष्णुतर्पणं तेन महाविष्णुः प्रीयताम् ॥ अपसव्यम् ॥ अद्यामुकगोत्रामुकप्रेतपरलोके महातृषानिवृत्यर्थं इदमुदकमुपतिष्ठतु ॥ सव्यम्॥ अद्यामुकगोत्रस्यामुकप्रेतस्य परलोके

महाक्षुधानिवारणार्थं विष्णुतर्पणकर्मणः सांगतासिद्ध्यर्थं महाविष्णुप्रीत्यर्थं यथा सम्पन्नेनाऽन्नेन तृप्तिपर्यन्तेन यथासंख्याकान्ब्राह्मणानेकं वा भोजयिष्ये ॥ तेन श्रीविष्णुः प्रीयताम् ॥ इति तर्पणम् ॥

तर्पण के अन्त में विष्णुको अर्पण करै। बाद तर्पण सांगता के लिये ब्राह्मण भोजन का संकल्प करै।

अथैकादशविष्णुश्राद्धप्रयोगः ॥ तत्रादौ स्नात्वा धौते वाससी परिधाय गोमयादिना संस्कृतं श्राद्धदेशमागत्य तत्र तिलतैलेन दीपं प्रज्वाल्य स्थापयेत् ॥ स्वासने प्राङ्मुखोपविश्य कुशपवित्रधारणं कृत्वा आचम्य प्राणानायम्य कुशासनोपरि कर्मपात्रं स्थाप्य जलेनापूर्य गन्धपुष्पयवकुशान् निक्षिप्य ॐ यद्देवा देवहेडनं देवा-

सश्च क्षमा व्वयम् ॥ अग्निर्मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः ॥१॥ यदि दिवा यदि नक्तमेनाꣳसि च क्षमा व्वयम् ॥ वायुर्म्मा तस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः ॥२॥ यदि जाग्रद्यदि स्वप्न ऽएनाꣳसि च क्षमा व्वयम् ॥ सूर्य्यो मा तस्मादेनसो विश्वान्मुञ्चत्वꣳ हसः ॥३॥ इत्यभिमंत्र्य ॥ ॐ अपवित्रः पवित्रो वेति कुशत्रयानीतजलैः श्राद्धदेयद्रव्याणि स्वात्मानं सिञ्चेत् ॥ ॐ यवपुष्पैः भूम्यै नमः इति त्रिः सम्पूज्य ॥ संकल्पः ॥ कुशत्रययवजलान्यादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्यर्थं असद्गतिविनाशार्थं सद्गत्यत्तय्यविष्णुलोकप्राप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलिकर्मांगभूतं एकादशविष्णुश्राद्धं विष्णवादिविष्णुपर्यन्तानां

एकोद्दिष्टविधिना एकतन्त्रेणाऽहं करिष्ये ॥ गायत्रीं त्रिर्जपित्वा ॥ ॐ देवताभ्य इति त्रिर्जपेत ततो गौरसर्षपान्गृहीत्वा पूर्वादिदिक्षु विकिरेत् ॥ नमो नमस्ते गोविन्द पुराणपुरुषोत्तम ॥ इदं श्राद्धं हृषीकेश रक्षतां सर्वतो दिशः ॥१॥ पूर्वे नारायणः पातु वारिजाक्षस्तु दक्षिणे ॥ प्रद्युम्नः पश्चिमे पातु वासुदेवस्तथोत्तरे ॥२॥ ऐशान्यां रक्षतां विष्णुराग्नेय्यां च त्रिविक्रमः ॥ नैरृत्यां पद्मनाभस्तु वायव्यां माधवोऽवतु ॥ ऊर्ध्वं गोवर्द्धनो रक्षेदधस्ताच्च अनन्तकः ॥३॥ इति विकीर्य ॥ तत उदङ्मुखः उत्तरोत्तरक्रमेण एकादश घटान्संस्थाप्य प्रथमघटे ॐ विष्णवे इदमासनम् ॥ इति पूर्वाग्रं कुशत्रयमुत्सृजेत् ॥ एवं द्वितीयादि ॥ ॐ शिवाय इदमासनम् ॥ २ ॥ ॐ यमाय

इदमासनम् ॥ ३ ॥ ॐ सोमराजाय इदमासनम् ॥ ४ ॥ ॐ हव्यवाहनाय इदमासनम् ॥ ५ ॥ ॐ कव्यवाहनाय इदमासनम् ॥ ६ ॥ ॐ मृत्यवे इदमासनम् ॥७॥ ॐ रुद्राय इदमासनम् ॥८॥ ॐ तत्पुरुषाय इदमासनम् ॥९॥ अपसव्येन प्रेताय इदमासनम् इति दक्षिणाग्रं मोटकरूपं आसनं उत्सृजेत् ॥१०॥ हस्तप्रक्षालनं ॥ सव्येन ॥ ॐ विष्णवे इदमासनम् ॥११॥ इत्येकादशाऽसनानि उत्सृजेत् ॥ ततः एकादशार्घपात्राणि धृत्वा तेषु एकैकं पवित्रं दत्वा ॥ ॐ शन्नो देवीति जलं प्रक्षिप्य ॥ ॐ यवोसीति यवान्प्रक्षिपेत् ॥ प्रेतपात्रे अपसव्येन ॥ तिलोसीति तिलान्प्रक्षिपेत् ॥ गन्धपुष्पे तूष्णीं क्षिपेत् ॥ ततोऽर्घपात्रं वामहस्ते कृत्वा पवित्रे भोजन-

पात्रे पूर्वाग्रं धृत्वा तदुपरि किञ्चिदुदकान्तरं दत्वा ॥

इस के बाद एकादश श्राद्ध का संकल्प करै। कर्मपात्र कलश करै। उस जल से सब सामग्री को प्रोक्षण करै दिग्रक्षण करै। बाद श्राद्ध करै। अक्षय्योदकके बाद दो दो अंजलि जल मंत्रोंसे पिंडपर देवे।

ॐ या दिव्या ऽआपः पयसा संबभूवुर्या ऽअन्तरिक्षा ऽउत वा पार्थिवीर्याः ॥ हिरण्यवर्णा यज्ञियास्ता न ऽआपः शिवाः शꣳ स्योना सुहवा भवन्तु इत्यर्घपात्र-माभिमन्त्र्य ॥ ॐ विष्णो एष तेऽर्घः इति पवित्रोपरि अर्घं दद्यात् ॥ एवं सर्वत्र शिवादिभ्योऽर्घदानम् ॥ तत्तदासनदक्षिणपार्श्वे उत्तानमेव धारयेत् ॥ प्रेतस्थाने अपसव्येन न्युब्जी कुर्यात् ॥ ततः एकादशघटेषु सव्यापसव्येन क्रमेण गंधपुष्पधूप-

दीपताम्बूलयज्ञोपवीतवासांसि दत्वा ॥ कुशत्रययवजलान्यादाय ॐ एतानि गन्ध-पुष्पधूपदीपताम्बूलयज्ञोपवीतवासांसि विष्णवे अत्त्य्यमस्तु स्वाहा॥१॥एवं शिवाय॥२॥ यमाय सपरिवाराय०॥३॥सोमराजाय॥४॥हव्यवाहनाय०॥५॥कव्यवाहनाय० ॥६॥ मृत्यवे०॥७॥रुद्राय०॥८॥तत्पुरुषाय०॥९॥अपसव्येन प्रेताय०॥१०॥सव्येनविष्णवे॥११॥ इति क्रमेण गंधादि उत्सृजेत्॥ तत एकादशपात्रेषु पृथक्२परिवेषणं कुर्यात्॥तत उत्तान-पाणिभ्यां प्रथमपात्रमालभ्य ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे ऽअमृते ऽअमृतं जुहोमि स्वाहा ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाᳪसुरे स्वाहा ॥ ॐ विष्णो हव्यं रक्षस्व इत्यंगुष्ठमन्ने निवेश्य ॥ ॐ अपहताऽ-

असुरा रक्षाꣳसि वेदिषद इति परितो यवान्विकीर्य ॥ ॐ एतदन्नं सोपस्करं अमृतरूपं हव्यं विष्णवे स्वाहा सम्पद्यन्तां न मम इत्युत्सृजेत ॥ एवं शिवादिभ्योऽपि दद्यात ॥ ततः पिण्डदानार्थं एकादशवेदिकां निर्माय सव्यापसव्येन अपहतेति वेदिकोपरि पूर्वाग्रां दक्षिणाग्रां च रेखाकरणम् ॥ ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्वस्मात् ॥ इत्यङ्गारं भ्रामयित्वा ॥ प्रत्येकेरेखोपरि कुशत्रयमास्तीर्य एकादशपात्रेषु जलयवगन्धपुष्पाणि कृत्वा प्रथमपात्रं गृहीत्वा ॐ विष्णवे अवनेनिक्ष्व इति प्रथमदर्भोपरि अवनेजनं दद्यात् ॥ एवं शिवादिभ्योऽपि क्रमेण दद्यात् ॥ तिलमधुघृता-

क्तेनान्नेन एकादशपिराडान्कृत्वा घृतमधुभ्यामभिघार्य एकं पिराडं कुशादीनि चादाय ॐ विष्णो एष ते पिराडो नम इति प्रथमावनेजनस्थाने दद्यात् ॥१॥ एवं द्वितीयादिपिंडान्दद्यात् ॥ अपसव्येन प्रेतपिराडं ते मया दीयते॰ ॥ सव्येन विष्णवे एवं एकादशपिंडान् ॥ तेषु पिराडोपरि पूर्ववत्प्रत्यवनेजनं प्रत्येकं दत्वा पिराडेषु सूत्राच्छादनगन्धपुष्पतुलसीधूपदीपनैवेद्य-पिराडशेषान्न-ताम्बूलपूगीफलदक्षिणादीनि क्रमेण दद्यात् ॥ ततः पिंडानार्चनविधेः परिपूर्णतास्तु ॥ अपसव्यं ॥ अमुकगोत्रस्यामुकप्रेतस्य सद्गतिः उत्तमलोकप्राप्तिरस्तु इति पठित्वा सव्येनाचमनं कृत्वा ॥ ॐ शिवा आपः सन्तु ॥ ॐ सौमनस्यमस्तु ॥ ॐ अक्षतं चारिष्टं चास्तु ॥ इति सुप्रो-

क्षितादि कुर्यात् ॥ ततः अक्षय्योदकदानम् ॥ ॐ विष्णोः यद्दत्तमन्नपानादिकं तदुपतिष्ठताम् ॥ एवं सर्वत्र षष्ठ्या विभक्त्या शिवादीनामक्षय्योदकं क्रमेण दद्यात् ॥ ततः पिण्डानामुपरि एकादशपवित्रान्दर्भान्समर्प्य प्रत्येकं जलधारां दद्यात् ॥ संकल्पः ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य परलोके महातृषानिवारणार्थं अमुकदुर्मरण-निमित्तकनारायणबलिविहित एकादशश्राद्धे पिण्डोपरि एकैकमंत्रेण द्विर्द्विरञ्जलि-दानमहं करिष्ये ॥ तत्र मंत्राः ॥ ॐ अपो देवा मधुमतीरगृभ्णन्नूर्जस्वतीराजस्व-श्चितानाः ॥ याभिर्मित्रा वरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ अद्यामुक-गोत्रस्यामुकप्रेतस्य नारायणबलिविहितैकादशश्राद्धान्तर्गतप्रथमे विष्णुपिंडे जल-

ते नमः ॥ एवं द्वावञ्जलीं दद्यात् ॥ ॐ उपयाम गृहीतोस्यन्तर्यच्छ मघवन्पाहि सोमम् ॥ उरुष्यसय ऽएषो यजस्व ॥ अद्यामुक० प्रेतस्य नरा० वलौ वि० एका० श्राद्धान्तर्गतद्वितीये शिव पिराडे जलधारा ते नमः ॥२॥ ॐ येना पावक चक्षसा भुरण्यं तं जनाँ ऽअनु ॥ त्वं व्वरुण पश्यासि ॥ अद्या० प्रेत० एका० श्राद्धा० तृतीये यमसपरिवाराय पिंडे जल० नमः ॥२॥ ॐ ये देवासो दिव्येकादशस्थ पृथिव्या मध्येकादशस्थ अप्सु क्षितो महिनैकादशस्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ अद्या० प्रेत० वलौ० एका० श्राद्धा० चतुर्थे सोमराज पिंडे० नमः ॥२॥ ॐ समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवᳬ सवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाहोरात्रे गच्छ

स्वाहा छन्दाᳬंसि स्वाहा द्यावा पृथिवीं गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाऽग्निर्वैश्वानरं गच्छ स्वाहा मनोमेहार्दि गच्छ दिवन्ते धूमो गच्छतु स्वर्ज्योतिः पृथिवी भस्मनापृण स्वाहा॥ अद्यामुकगोत्र० प्रेत० विहित० श्राद्धान्त० पंचमे हव्यवाहनपिण्डे जलधारा ते नमः ॥२॥ ॐ अग्निर्ज्योति० ॥ अद्या० प्रेतस्य० वलौ० एका० श्राद्धा० षष्ठे सोमपितृमन्पिण्डे जलधारा ते नमः॥३॥ ॐ हिरण्यगर्भः० ॥ अद्या० प्रेत० नारा० एकादश० सप्तमे रुद्ररूपपिंडे जलधारा ते नमः ॥२॥ ॐ इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्प्ययतु श्रेष्ठतमाय कर्मण ऽआप्यायद्ध्वमघ्न्या ऽइन्द्राय भागं प्रजावतीरनमीवा ऽअयक्ष्मा मावस्तेन ऽईशत

माघसऽ सो दध्रुवा ऽअस्मिन्गोपतौ स्यात् वह्वीर्यजमानस्य पशून्पाहि॥अद्या० प्रेत० वलौ० श्रा० अष्टमे मृत्युपिंडे जलधारा ते नमः ॥ २ ॥ ॐ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ॥ दूरं गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसं-कल्पमस्तु ॥ अद्या० प्रेत० एकादश० नवमे तत्पुरुषपिंडे जलधारा ते नमः ॥२॥ ॐ याः फलिनीर्या० ॥ अपसव्यम् ॥ अद्या० प्रेतस्य० एका० दशमे प्रेतपिण्डे जलधारा ते नमः ॥२॥ सव्यम् ॥ ॐ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वत स्पात्॥ सम्बाहुभ्यां धमति सं पतत्रैर्द्यावा भूमी जनयन्देव ऽएकः ॥ अद्या० प्रेत० ना० वलौ० एका० एकादशे विष्णुपिंडे जलधारा ते नमः ॥२॥ ततोऽप-

सव्यम् ॥ अद्यामुकगोत्रामुकप्रेतपरलोके महातृषानिवारणार्थं अमुकदुर्मरणनिमित्तकनारायणबलौ विहितविष्णवादिविष्णुपर्यन्तं एकादशपिंडोपरि इदमुदकमुपतिष्ठतु इति त्रिवारं जलधारां दद्यात् ॥ सव्यम् ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं परलोके महाक्षुधानिवृत्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलौ विहितैकादशश्राद्धकर्मणः समृद्ध्यर्थं इमान्येकादश आमान्नानि गंधपुष्पाद्यर्चितानि सदक्षिणाकानि विष्णवादिविष्णुपर्यन्तानि तत्तत् तृप्त्यर्थं यथायथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे ॥ अपसव्येन दशमसर्वान्पिण्डान्सव्येनैवाघ्रायोत्थापयेत् ॥ पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य दुर्मरणनि-

मित्तिकनारायणबलिविहितैकादशश्राद्धसाङ्गतासिद्ध्यर्थं इमानि हिरण्यादिएकादश-दानानि तत्तद्देवतातृप्तये यथा० नामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे ॥ हिरण्यं वस्त्रं रजतं गुडाज्यं लवणं तथा ॥ लोहदण्डं तिलान्धान्यं महिषीं चामरं तथा ॥ ततो देवताभ्य इति त्रिर्जपेत् ॥ ततः पाणिना दीपं निर्वाप्य हस्तौ पादौ प्रक्षाल्याचम्य ॥ प्रमादात्कुर्वतां कर्मेति पठेत् ॥ श्राद्धीयवस्तूनि जले क्षिपेत् ॥ इत्येकादशश्राद्धविधिः ॥

बाद जलधारा के ग्यारह ब्राह्मण का पूजन करके ग्यारह सिद्धा देवे सहित दक्षिणा के। बाद सव्य अपसव्य से पिंड को सूंघकर उठावै। पिंड के नीचे का कुशा अंगार उठाकर, दूसरे अग्नि में छोड़ दे। बाद ग्यारह सुवर्ण आदि दान करके ब्राह्मणों को देवे 'देवताभ्य' इस मन्त्र को तीन दफै पढ़े,

हाथ से दीपको बुझा कर हाथ पैर धोवे, आचमन करै, 'प्रमादात्' पढ़े। श्राद्ध वस्तु ब्राह्मण को देवे या जलमें छोड़ देवे। एकादश श्राद्ध समाप्त हुआ।

आगे पंच श्राद्ध कहते हैं—उसके पाँच सूक्त पाठ कहते हैं।

अथ पञ्चश्राद्धम् ॥ तत्रादौ पंचसूक्तजपः ॥ ब्रह्मसूक्तम् ॥ ॐ तेजोसि शुक्रम-मृतमायुष्मा ऽआयुर्म्मे पाहि ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनो र्व्वाहुभ्याम्पूष्णो हस्ताभ्यामाददे ॥१॥ इमामगृभ्णान्नशनामृतस्य पूर्व्वऽआयुषि व्विदथेषु कव्या ॥ सा नो ऽअस्मिन्त्सुतऽ आ वंभूव ऽऋतस्य सामन्त्सरमारपन्ती ॥२॥ अभिधा ऽअसि भुवनमसि यन्तासि धर्ता ॥ स त्वमग्निं व्वैश्वानरꣳ स प्रथसङ्गच्छ स्वाहा

कृतः ॥३॥ स्वगात्वा देवेभ्यः प्रजापतये ब्रह्मन्नश्वम्भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासम् ॥ तम्बधानदेवेभ्यः प्रजापतये तेन राध्नुहि ॥४॥ प्रजापतये त्वा जुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वा जुष्टम्प्रोक्षामि वायवे त्वा जुष्टम्प्रोक्षामि विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामि ॥ योऽअर्वन्तञ्जिघांसति तमभ्यमीतिवरुणः ॥ परो मर्त्तः परः श्वा ॥५॥ अग्नये स्वाहा सोमाय स्वाहा पाम्मोदाय स्वाहा सवित्रे स्वाहा वायवे स्वाहा विष्णवे स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥ ६ ॥ ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा वक्क्रन्दाय स्वाहा

प्रोथंते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्ठाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहा सीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा सᳬहानाय स्वाहो पस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा ॥७॥ ॐ यते स्वाहा धावते स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा जवाय स्वाहा बलाय स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहेक्षमाणाय स्वाहेक्षिताय स्वाहा

व्वीक्षिताय स्वाहा निमेषाय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रङ्करोति तस्मै स्वाहा कुर्वते स्वाहा कृताय स्वाहा ॥८॥ ॐ तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥९॥ ॐ हिरण्यपाणिमूतये सवितारमुपह्वये ॥ सचेत्ता देवता पदम् ॥१०॥ ॐ देवस्य चेततो महीम्प्रसवितुर्हवामहे ॥ सुमतिꣳ सत्यराधसम् ॥११॥ ॐ सुष्टुतिꣳ सुमती वृधोरातिꣳ सवितुरीमहे ॥ प्रदेवाय मतीविदे ॥१२॥ ॐ रातिꣳ सत्पतिम्महे सवितारमुपह्वये ॥ आसवन्देववीतये ॥१३॥ ॐ देवस्य सवितुर्म्मतिमासवं व्विश्वदेव्व्यम् ॥ धिया भर्गम्मनामहे ॥१४॥ ॐ अग्निꣳ स्तोमेन बोधय समिधानो ऽअमर्त्यम् ॥ हव्व्या देवेषु नो दधत्

॥ १५ ॥ ॐ सहं व्व्यवाडमर्त्यं ऽउशिगदूतश्च नो हितः ॥ अग्निर्द्धिया समृगवति
॥१६॥ ॐ अग्निन्दूतम्पुरोदधे हव्व्यवाहमुपब्रुवे ॥ देवाँ २॥ऽआसादयादिह ॥१७॥
ॐ अजीजनो हि पवमानसूर्य्यं व्विधारेशक्क्मना पयः ॥ गोजीरया रहमाणः
पुरन्ध्या ॥१८॥ ॐ व्विभूर्म्मात्रा प्रभूः पित्रा श्वोसि हयोस्यत्योसि मयोस्यव्वोसि
सप्तिरसि व्वाज्युसि व्वृषासि नृमणा ऽअसि ॥ ययुर्न्नामासि शिशुर्न्नामास्यादित्या-
नाम्पत्वान्निवहि देवा ऽआशापाला ऽएतन्देवेभ्योश्च म्मेधाय प्रोक्षितः रक्षते
हरन्ति रिहरमता मिह धृतिरिह स्वधृतिः स्वाहा ॥ १९ ॥ ॐ काय स्वाहा कस्मै
स्वाहा कतमस्मै स्वाहा स्वाहा धिमाधीताय स्वाहा मनः प्रजापतये स्वाहा चित्तं

व्विज्ञाता यादित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे न रन्धिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीयाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा व्विष्णवे स्वाहा व्विष्णवे निभूयपाय स्वाहा व्विष्णवे शिपिविष्टाय स्वाहा ॥२०॥ ॐ व्विश्श्वो देवस्य नेतुर्म्मर्तो व्वुरीत सक्ख्यम् ॥ व्विश्श्वो राय ऽइषुद्ध्यति द्युम्नं व्वृणीत पुष्यसे स्वाहा ॥२१॥ ॐ आब्रह्मन्न्ब्राह्मणो ब्रह्म वर्च्चसी जायतामा राष्ट्रे राजन्न्यः शूर ऽइषव्व्योतिव्व्याधी महारथो जायतान्दोग्ग्ध्री धेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्धिर्य्योषा जिष्ष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतान्नि-

कामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥२२॥ प्राणाय स्वाहा पानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मनसे स्वाहा ॥ २३ ॥ ॐ प्राच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहावाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ २४ ॥ ॐ अद्भ्यः स्वाहा वार्भ्यः स्वाहोदकाय स्वाहा तिष्ठन्तीभ्यः स्वाहा स्रवन्तीभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा कूप्याभ्यः स्वाहा सूद्याभ्यः स्वाहा धार्य्याभ्यः स्वाहा

र्णवाय स्वाहा समुद्द्रा स्वाहा सरिराय स्वाहा ॥२५॥ व्वाताय स्वाहा धूमाय स्वाहाब्भ्राय स्वाहा मेघाय स्वाहा व्विद्योतमानाय स्वाहा स्तनयते स्वाहावस्फूर्ज्जते स्वाहाव्वर्षते स्वाहा वववर्षते स्वाहोग्ग्रं व्वर्षते स्वाहा शीग्घ्रं व्वर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा प्प्रुष्णते स्वाहा शीकायते स्वाहा प्प्रुष्वाब्भ्यः स्वाहा ह्रादुनीब्भ्यः स्वाहा नीहाराय स्वाहा ॥२६॥ ॐ अग्नये स्वाहा सोमाय स्वाहेन्द्राय स्वाहा पृथिव्व्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा दिग्ग्भ्यः स्वाहाशाब्भ्यः स्वाहोर्व्व्यै दिशे स्वाहार्व्वाच्च्यै दिशे स्वाहा ॥ २७ ॥ ॐ नक्षत्रेब्भ्यः स्वाहा नक्षत्रियेब्भ्यः स्वाहाहोरात्त्रेब्भ्यः स्वाहार्द्धमासेब्भ्यः स्वाहा मासेब्भ्यः स्वाहा ऋतुब्भ्यः

स्वाहार्तुवेभ्यः स्वाहा संव्वत्सराय स्वाहा द्यावापृथिवीभ्याᳬ स्वाहा चन्द्राय स्वाहा सूर्य्याय स्वाहा रश्मिभ्य स्वाहा व्वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा व्विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा व्वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥२८॥ ॐ पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्य्याय स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वा ऽद्भ्यः स्वाहौषधीभ्यः स्वाहा व्वनस्पतिभ्यः स्वाहा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा ॥२९॥ ॐ असवे स्वाहा व्वसवे स्वाहा व्विभुवे स्वाहा विवस्वते स्वाहा गणश्रिये स्वाहा गणपतये स्वाहाभि-

भुवे स्वाहाधिपतये स्वाहा शूषाय स्वाहा सꣳ सर्प्पाय स्वाहा चन्द्राय स्वाहा ज्ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा दिवापतये ते स्वाहा ॥ ३० ॥ ॐ मधवे स्वाहा माधवाय स्वाहा शुक्राय स्वाहा शुचये स्वाहा नभसे स्वाहा नभस्याय स्वाहेषाय स्वाहोर्जाय स्वाहा सहसे स्वाहा सहस्याय स्वाहा तपसे स्वाहा तपस्याय स्वाहाꣳहसस्पतये स्वाहा ॥३१॥ ॐ व्वाजाय स्वाहा प्रसवाय स्वाहा पिजाय स्वाहा क्रतवे स्वाहा स्वः स्वाहा मूर्ध्ने स्वाहा व्व्यश्नुविने स्वाहान्त्याय स्वाहा-न्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्रजापतये स्वाहा ॥३२॥ आयुर्य्यज्ञेन कल्पताꣳ स्वाहा प्प्राणो यज्ञेन कल्पताꣳ स्वाहापानो यज्ञेन

कल्पताᳪ स्वाहाव्यानो यज्ञेन कल्पताᳪ स्वाहोदाने यज्ञेन कल्पताᳪ । स्वाहा समानो यज्ञेनकल्पताᳪ स्वाहा चक्षुर्यज्ञेन कल्पताᳪ स्वाहा श्रोत्रं यज्ञेन कल्पताᳪ स्वाहा वाग्यज्ञेन कल्पताᳪ स्वाहा मनो यज्ञेन कल्पताᳪ स्वाहात्मा यज्ञेन कल्पताᳪ स्वाहा ब्रह्मा यज्ञेन कल्पताᳪ स्वाहा ज्योतिर्यज्ञेन कल्पताᳪ स्वाहा स्वर्यज्ञेन कल्पताᳪ स्वाहा पृष्ठं यज्ञेन कल्पताᳪ स्वाहा यज्ञो यज्ञेन कल्पताᳪ स्वाहा ॥ ३३ ॥ ॐ एकं स्मै स्वाहा द्वाभ्याᳪ स्वाहा शताय स्वाहैकशताय स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहा ॥३४॥

अथ विष्णुसूक्तम् ॥ ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स

भूमिꣳ सर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥ ॐ पुरुष ऽएवेदꣳ सर्व्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ ॐ एतावानस्य महिमातो ज्ज्यायाँश्च पूरुषः ॥ पादोऽस्य व्विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥३॥ ॐ त्रिपादूर्द्ध्व ऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो व्विष्वङ् व्यक्रामत्साशनानशने ऽअभि ॥४॥ ॐ ततो व्विराडजायत व्विराजो ऽअधि पूरुषः ॥ स जातो ऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥ ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्रे व्वायव्यानारण्या ग्ग्राम्म्याश्च ये ॥६॥ ॐ तस्माद्यज्ञात्सर्व्वहुत ऽऋचः सामानि जज्ञिरे ॥ छन्दाꣳसि जज्ञिरे तस्म्माद्यजुस्तस्म्मादजायत ॥७॥ ॐ

तस्म्मादश्श्वा ऽअजायन्त ये के चोभयादतः ॥ गावो ह जज्ञिरे तस्म्मात्तस्म्मा- ज्जाता ऽअजावयः ॥८॥ ॐ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेन देवा ऽअयजन्त साद्ध्या ऽऋषयश्च ये ॥९॥ ॐ यत्पुरुषं व्यदधुः कतिधा व्यक- ल्पयन् ॥ मुखङ्किमस्स्यासीत्किम्बाहू किमूरू पादा ऽउच्च्येते ॥१०॥ ॐ ब्राह्मणोस्स्य मुखमासीद्बाहू राजन्न्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्द्रो ऽअजायत ॥११॥ ॐ चन्द्रमा मनसो जातश्श्चक्षोः सूर्य्यो ऽअजायत ॥ श्श्रोत्राद्वायुश्श्च प्राणश्श्च मुखादग्ग्निरजायत ॥१२॥ ॐ नाब्भ्या ऽआसीदन्तरिक्षᳬ शीर्ष्णो द्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथा लोकाँ२ ॥ अकल्पयन् ॥ १३ ॥

ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्न्वत ॥ व्वसन्तो स्स्यासीदाज्ज्यङ्ग्रीष्म्म ऽइध्मः शरद्धविः ॥१४॥ ॐ सप्तास्स्यासन्न्परिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञन्तन्न्वाना ऽअबध्नन्न्पुरुषम्पशुम् ॥१५॥ ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्न्यासन् ॥ ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साद्ध्याः सन्ति देवाः ॥१६॥

अथ रुद्रसूक्तम् ॥ ॐ नमस्ते रुद्रमन्न्यव ऽउतोत ऽइषवे नमः ॥ बाहुब्भ्यामुत तेनमः ॥१॥ ॐ या ते रुद्र शिवा तनूरघोरा पापकाशिनी ॥ तया नस्तन्न्वा शन्तमया गिरिशन्ताभि चाकशीहि ॥२॥ ॐ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्ष्यस्तवे ॥ शिवा-

ङ्गिरित्रतां कुरु मा हिꣳसीः पुरुषञ्जगत् ॥३॥ ॐ शिवेन वचसा त्वा गिरिशाच्छा वदामसि ॥ यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमना ऽअसत् ॥४॥ ॐ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥ अहींश्च सर्व्वाञ्जम्भयन्त्सर्व्वाश्च यातुधान्योऽधराचीः परासुव ॥५॥ ॐ असौ यस्ताम्रो ऽअरुण ऽउत बभ्रुः सुमङ्गलः ॥ ये चैनꣳ रुद्रा ऽअभितो दिक्षु श्रिताः सहस्रशो ऽवैषाꣳ हेड ऽईमहे ॥६॥ ॐ असौ यो ऽवसर्प्पति नीलग्रीवो विलोहितः ॥ उतैनङ्गोपा ऽअदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः ॥७॥ ॐ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो ये ऽअस्य सत्वानो ऽहन्तेभ्यो ऽकरन्नमः ॥८॥ ॐ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।

याश्श्च ते हस्त ऽइषवः परा ता भग वो व्वप ॥९॥ ॐ विज्ज्यन्धनुः कपर्द्दिनो विशल्ल्यो बाणवाँ२उत ॥ अनेशन्नस्य या ऽइषव ऽआभुरस्य निषङ्गधिः ॥१०॥ ॐ या ते हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः॥तयास्म्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥११॥ ॐ परि ते धन्न्वनो हेतिरस्मान्न्वृणक्तु विश्वतः ॥ अथो य ऽइषुधिस्त-वारे ऽअस्म्मन्निधेहि तम् ॥१२॥ ॐ अवतत्य धनुष्ट्वᳬ सहस्राक्ष शतेषुधे ॥ निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना भव ॥१३॥ ॐ नमस्त ऽआयुधायानातताय धृष्णवे ॥ उभाब्भ्यामुत ते नमो बाहुब्भ्यान्तव धन्न्वने ॥ १४ ॥ ॐ मा नो महान्तमुत मा नो ऽअर्भकम्मा न ऽउक्षन्तमुत मा न ऽउक्षितम् ॥ मा नो व्वधीः

पितरम्मोत मातरम्मा नः प्रियास्तन्न्वो रुद्र रीरिषः ॥१५॥ ॐ मानस्तोके तनये मान ऽआयुषि मानो गोषु मानो ऽअश्वेषु रीरिषः ॥ मानो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥१६॥ केचित्त्वत्र रुद्राध्यायं पठन्ति ॥

## अथ यमसूक्तम् ॥

ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ॥ तदेव शुक्रन्तद्ब्रह्म ता ऽआपः स प्रजापतिः ॥१॥ ॐ सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ॥ नैनं- मूर्द्ध्वन्न तिर्य्यञ्चन्न मद्ध्ये परिजग्ग्रभत् ॥२॥ ॐ न तस्य प्रतिमा ऽअस्ति यस्य नाम महद्यशः ॥ हिरण्यगर्भ ऽइत्येष मा मा हिᳬसीदित्येषा यस्मान्न जात

ऽइत्येषः । ३॥ ॐ एषो ह देवः प्रदिशो नु सर्वाः पूर्वो ह जातः स ऽउ गर्भे ऽअन्तः ॥ स ऽएव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः ॥४॥ यस्माज्जातन्न पुरा किञ्चन नैव य ऽआबभूव भुवनानि विश्वा ॥ प्रजापतिः प्रजया सꣳ रराणस्त्रीणि ज्योतीꣳषि सचते सषोडशी ॥५॥ येन द्यौरुग्रा पृथिवी च दृढा येन स्वस्तभितं येन नाकः ॥ यो ऽअन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥६॥ यङ्क्रन्दसी ऽअवसा तस्तभाने ऽअभ्यैक्षेतां मनसा रेजमाने ॥ यत्राधिसूर ऽउदितो विभाति कस्मै देवाय हविषा विधेम ॥ आपो ह यद्बृहतीर्यश्चिदापः ॥७॥ वेनस्तत्पश्यन्निहि-

तद्गुहा सद्यत्र विश्वम्भवत्येकनीडम् ॥ तस्मिन्निदꣳ सञ्चविचैति सर्वꣳ स ऽओतः प्रोतश्च विभूः प्रजासु ॥ ८ ॥ प्रतद्वोचेदमृतन्नु विद्वान्गन्धर्वो धाम विभृतङ्गुहा सत् ॥ त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पिता सत् ॥९॥ स नो बन्धुर्ज्जनिता स विधाता धामानि वेद भुवनानि विश्वा ॥ यत्र देवा ऽअमृतमानशानास्तृतीये धामन्नद्ध्यैरयन्त ॥१०॥ परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च ॥ उपस्थाय प्रथमजामृतस्यात्मनात्मान-माभि संविवेश ॥११॥ परि द्यावापृथिवी सद्य ऽइत्वा परि लोकान्परि दिशः परि स्वः ॥ ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासीत् ॥१२॥ सदसस्पति-

मदुभुतम्प्रियमिन्द्रस्य काम्म्यम् ॥ सनिम्मेधा मयासिषुᳬ स्वाहा ॥१३॥ याम्मेधान्दे-
वगणाः पितरश्चोपासते ॥ तया मामद्य मेधयाग्ने मेधाविनङ्कुरु स्वाहा ॥ १४ ॥
मेधाम्मे वरुणो ददातु मेधामग्निः प्रजापतिः ॥ मेधामिन्द्रश्च वायुश्च मेधान्धा-
ता ददातु मे स्वाहा ॥ १५ ॥ इदम्मे ब्रह्म च क्षत्रञ्चोभे श्रियमश्नुताम् ॥ मयि
देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ॥१६॥

॥ अथ प्रेतसूक्तम् ॥

ॐ अपेतो यन्तु पणयोसुम्म्ना देवपीयवः ॥ अस्य लोकः सुतावतः द्युभि-
रहोभिरक्तुभि व्यक्तं यमो ददात्ववसानमस्मै ॥१॥ सविता ते शरीरेभ्यः पृथिव्या

ल्लोकमिच्छतु ॥ तस्मै युज्ज्यन्तामु स्त्रियः ॥२॥ वायुः पुनातु सविता पुनात्व-
ग्नेर्भ्राजसा सूर्य्यस्य वर्च्चसा ॥ विमुच्यन्तामु स्त्रियः ॥३॥ अश्वत्थे वो निषदनं-
पर्णे वो वसतिष्कृता ॥ गोभाज ऽइत्किलासथ यत्सनवथ पूरुषम् ॥४॥ सविता
ते शरीराणि मातुरुपस्थ ऽआवपतु ॥ तस्मै पृथिवि शम्भव ॥५॥ प्रजापतौ त्वा देव-
तायामुपोदके लोके निदधाम्यसौ ॥ अप नः शोशुचदघम् ॥६॥ परम्मृत्यो ऽअनुपरे
हि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मा नः
प्रजां रीरिषो मोत वीरान् ॥७॥ शं वातः शं हि ते घृणिः शन्ते भवन्त्विष्टकाः ॥
शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ॥८॥ कल्पन्तान्ते दिशस्तुभ्य-

मार्पं÷ शिवतंमास्तुब्भ्यंम्भवन्तु सिन्धंवः ॥ अन्तरिक्षᳫं शिवन्तुब्भ्यङ्कल्पन्तान्ते दिशः सर्वाः ॥९॥ अश्मन्न्वतीरीयते सᳫंरभद्ध्वमुत्तिष्ठतप्रतरता सखायः ॥ अत्राजहीमो शिवाये ऽअसञ्छिवान्व्वयमुत्तरे माभिवाजान् ॥१०॥ अपाघमपकिल्बिषमपंकृत्यामपपो- रपं÷ ॥ अपामार्गत्वमस्मदपंदुःष्वप्न्यᳫं सुव ॥११॥ सुमित्रिया न ऽआप ऽओषं- धयः सन्तु ॥ दुर्म्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टि यश्च वयन्द्विष्मः ॥१२॥ अन- ड्वाहमन्न्वारंभामहे सौरभेयᳫं स्वस्तये ॥ स न ऽइन्द्र ऽइव देवेब्भ्यो वन्हिः सन्तारंणो भव ॥१३॥ उद्वयन्तमंसस्प्परि स्वः पश्यन्त ऽउत्तरम् ॥ देव- न्देवत्रा सूर्य्यमगन्म ज्ज्योतिरुत्तमम् ॥१४॥ इमञ्जीवेब्भ्यं÷ परिधिन्दधामि मैषा-

न्नुगादपंगे ऽअस्थ्यैमेतम् ॥ शतञ्जींवन्तु शरदं÷ पुरूचीरन्तर्म्मृत्युन्दंधताम्पर्वंतेन ॥१५॥ अग्ग्न ऽआयूं ᳪ षि पवस ऽआसुवोर्ज्जमिषंञ्च नः ॥ आरेबांधस्वदुच्छुनाम् ॥१६॥ आयुंष्मानग्ग्ने हविषां वृधानो घृतप्रंतीको घृतयोंनिरेधि ॥ घृतम्पीत्वा मधु चारुगव्यंम्पितेवं पुत्रमभि रंक्षतादिमान्त्स्वाहा ॥१७॥ परीमे गामंनेषत पर्य्यग्निमंहृषत ॥ देवेष्ष्वक्रतश्श्रवः क ऽइमाँ २॥ ऽआदंधर्षति ॥१८॥ क्रव्यादंमग्निम्प्रहिंणोमि दूरं य्यमराज्ज्यङ्गच्छतु रिप्रवाहः ॥ इहैवायमितंरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥१९॥ वहवपाञ्जातवेदः प्पितृभ्यो यत्रैनान्वेत्थ निहिंतान्पराके ॥ मेदंसः कुल्ल्या ऽउपतान्त्स्रवन्तु सत्या ऽएषामाशिषः सन्नमन्ताᳪ स्वाहा

॥२०॥ स्योना पृथिवि नो भवानृक्षरानिवेशनी ॥ यच्छानः शर्म्म सप्रथाः ॥ अपं नः शोशुचदघम् ॥२१॥ अस्मात्वमधि जातोसि त्वदयञ्जायतामपुनः ॥ असौ स्वर्गाय लोकाय स्वाहा ॥२२॥ इति पंचसूक्तजपः ॥

अब पांच श्राद्ध कहते हैं। स्नान करके आचमन प्राणायाम करै। बाद संकल्प करे बाद ब्रह्म विष्णु रुद्र यम प्रेत इन पाँच नामों से आसन इत्यादि से पूजन करै।

अथ पञ्चश्राद्धविधिः ॥ स्नात्वा धौते वाससी परिधाय आचम्य प्राणानायम्य अद्येत्यादि उच्चार्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलिविहितं श्राद्धपञ्चकमेकोद्दिष्टविधिना करिष्ये ॥ इति

संकल्पयेत्ततस्त्रिर्गायत्रीं जपित्वा ॥ ॐ देवताभ्य इति त्रिर्जपेत् ॥ ततः कुशत्रय-यवजलान्यादाय ॥ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलिविहितपञ्चश्राद्धे ब्रह्मन्निदमासनं ते नमः ॥ इत्यासनमुत्सृजेत् ॥ एवं पञ्चश्राद्धे विष्णो इदमासनं ते नमः ॥ पुन पञ्चश्राद्धे रुद्र इदमासनं ते नमः ॥ पुनः पञ्चश्राद्धे यम इदमासनं ते नमः ॥ अपसव्यम् ॥ मोटकातिलजलान्यादाय ॥ अद्यामुकगोत्रामुकप्रेत प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलिविहितपञ्चश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम् ॥ इति दक्षिणाग्रं उत्सृजेत् ॥ ॐ अपहता ऽअ-

सुरा रत्तांᳬसि वेदिषद ॥ इति वामावर्तेन श्राद्धदेशे तिलान्विकीर्य ॥ आयन्तु नः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोधिब्रुवन्तु ते वन्त्वस्मान् ॥ इति मंत्रं पठेत् ॥ ततः सव्येन पुटकचतुष्टये अपसव्येन पंचमपुटके ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ इति मंत्रेण दक्षिणाग्राणि पवित्राणि धृत्वा ॥ एवं सव्यापसव्याभ्यां पात्रचतुष्टये पंचमपात्रे च ॐ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये ॥ शं य्योरभिस्रवन्तु नः ॥ इति मंत्रेण जलं क्षिपेत् ॥ ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः इति मंत्रेण पात्रचतुष्टये यवान्क्षिपेत् ॥ अप-

सव्येन ॥ ॐ तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः ॥ प्रत्नमाद्भिः पृक्तः स्वधया पितृँल्लोकान्प्रीणाहि नः स्वाहा ॥ इति पंचमपात्रे तिलान्प्रक्षिप्य ॥ ततः सव्यापसव्याभ्यां क्रमेण तूष्णीं गन्धपुष्पे च निःक्षिपेत् ॥ ततः प्रथमार्घपात्रं सव्येन वामहस्ते कृत्वा पवित्रमन्नपात्रोपरि उत्तराग्रं धृत्वा तदुपरि किंचिदुदकान्तरं दत्वा अपरेणाऽऽच्छाद्य ॥ ॐ या दिव्या ऽआपः पयसा संबभूवुर्या ऽअन्तरिक्षा ऽउत पार्थिवीर्याः॥ हिरण्यवर्णा यज्ञियास्ता न ऽआपः शिवाः सशस्योना सुहवा भवन्तु ॥ इति पठित्वा ॥ दक्षिणहस्ते कुशत्रय-यवजलान्यादाय ॥ ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौ विहितपञ्च-

श्राद्धे ब्रह्मन् एष हस्तार्घस्ते नमः ॥ इति पवित्रोपरि अर्घजलं दद्यात् ॥ एवं द्वितीयतृतीयचतुर्थविष्णुरुद्रयमासनेभोजनपात्रेषु अर्घ्यं दद्यात् ॥ अपसव्यं कृत्वा पातितवामजानुः पंचमार्घपात्रं वामहस्ते कृत्वा पवित्रे भोजनपात्रे उत्तराग्रं धृत्वा तदुपरि किंचिदुकान्तरं दत्वा ॐ या दिव्या इति पठित्वा ॥ मोटकतिलान्यादाय ॐ अद्यामुकगोत्रपितरमुकप्रेतप्रेतत्व विमुक्त्यर्थममुकदुर्मरणनिमित्तक नारायणबलौ विहितपंचश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम् इति पवित्रोपरि अर्घजलमुत्सृजेत् ॥ ततः सव्येन ब्रह्मादिदेवानां चतुष्टयार्घपात्राणि तत्तद्दक्षिणपार्श्वे ब्रह्मविष्णुरुद्रयमस्थानमसीति उत्तानमेव धारयेत् ॥ अपसव्येन प्रेतासनवामपार्श्वे प्रेतस्थान-

मसीति न्युब्जं कुर्यात् ॥ ततः सव्यापसव्येन पंचासनेषु गंधादि दत्वा ॥ सव्येन कुशत्रययवजलान्यादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकात्राप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौ विहितपञ्चश्राद्धे ब्रह्मन् एतानि गंध-पुष्प-धूप-दीप-ताम्बूल-यज्ञोपवीत-वासांसि ते नमः ॥ एवं विष्णवादीनामपि दद्यात् ॥ ततः अपसव्यं मोटकतिलजलान्यादाय ॥ अद्यामुकगोत्रामुकप्रेतामुकदुर्मरणनिमित्तकनारायणबलौ विहितपञ्चश्राद्धे एतानि गंधादीनि ते मया दीयते तवोपतिष्ठताम् ॥

बाद जल लेकर आसन भोजनपात्र के चारोतरफ घुमावे बाद अन्नका अग्रभाग लेकर घृत जलमधु युक्त अपसव्यसे भूस्वामी को अन्नदेवै, बाद परिवेषण करें, एक दोनियामे जल एक में घृत अन्न पर दोनों हाथ से मधु देवै, उत्तान हाथ से पात्र को छूवै बाद अंगुष्ठ निवेशन करै बाद संकल्प करै ।

ततः सव्याप-सव्येन आसनस्य भोजनपात्रस्य चतुर्दिशं चतुरस्त्रं मंडलं जलेन कृत्वा श्राद्धीयान्नाग्रभागं घृतव्यंजनांतिलजलयुतं पुटकादौ कृत्वा ततोऽप-सव्येन ॐ इदमन्नमेतद्भूस्वामिपितृभ्यो नम इत्युत्सृजेत् ॥ सव्येन देवभोजनपात्रेषु अपसव्येन प्रेतपात्रे अन्नं परिविष्य घृतं जलं चोपनीय अन्नोपरि हस्तद्वयेन सव्या-पसव्यक्रमेण मधु दत्वा ॥ ॐ मधुवाता ऽऋतायते मधु क्षरन्ति सिंधवः ॥ माध्वीर्न्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ॥ मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ ऽअस्तु सूर्य्यः ॥ मध्वीर्गावो भवन्तु नः ॥ ॐ मधु मधु मध्विति च जपेत् ॥ तत उत्तानपाणिभ्यां अन्नपात्रमालभ्य ॐ पृथिवी ते पात्रं

द्यौरपिधानं ब्राह्मणस्य मुखे ऽअमृते ऽअमृतं जुहोमि स्वाहा ॥ ॐ इदं विष्णुर्विच-
क्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाꣳसुरे ॥ ॐ कृष्णहव्यमिदं रक्ष मदीयम् ॥
इति पठित्वा वामेन पात्रमत्यजन् दक्षिणहस्ताङ्गुष्ठमन्नजलघृतेषु निवेश्य ॐ इदम-
न्नम् ॐ इमा आपः ॐ इदमाज्यम् ॥ ॐ इदं हविरिति निक्षिप्य ॥ ॐ यवोसि
यवयास्मद्द्वेषो यवयारातीः इत्यन्नोपरि यवान्विकीर्य दक्षिणहस्तेन कुशादीन्यादाय
ॐ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनि-
मित्तकनारायणबलौ विहितपञ्चश्राद्धे ब्रह्मन् इदमन्नं सोपकरणं ते नमः ॥ इत्युत्सृजेत् ॥
एवं विष्णवादीनामपि कुर्यात् ॥ तत अपसव्यम् ॥ प्रेतपात्रे व्यस्तपाणिभ्यां ॐ पृथिवी

ते पात्रं ॥ ॐ इदं विष्णु० ॐ कृष्णाकव्य० ॐ इदमन्नं ॐ इमा आपः ॐ इदमाज्यं ॐ इदं कविः ॐ अपहतेति तिलान्विकीर्य ॥ मोटकतिलजलान्यादाय ॥ अद्यामुकगोत्रामुकप्रेतप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौ विहितपंचश्राद्धे इदमन्नं सोपकरणं ते मया दीयते तवोपतिष्ठताम् ॥ इत्यन्नमुत्सृजेत् ॥

बाद रक्षोघ्न मंत्र पढ़ै । बाद भूमि में तिल छोड़ै । पितृमंत्र पढ़ै । बाद 'पुरुषसूक्त' सहस्रशीर्षा १६ मंत्र 'अप्रतिरथसूक्त' आशुः १२ मंत्र नमस्तुभ्यं मंत्र यह पढ़ै ।

ततः सव्येन गायत्रीं मधुवातारक्षोघ्नमंत्रान् इत्यादिकान् जपेत्॥ ॐ कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ२॥ इभेन ॥ तृष्वीमनु प्रसितिन्द्रूणानो ऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥ तव भ्रमास ऽआशुया पतन्त्यनु स्पृश धृषता

शोशुचानः ॥ तपूंष्यग्ने जुह्वापतङ्गा नसंन्दितो विसृज विष्वंगुल्का? ॥२॥ प्रतिस्पशो विसृज तूर्णितमो भवा पायुर्विशो ऽअस्या ऽअदब्धः ॥ यो नो दूरे ऽअघशंसो यो ऽअन्त्यग्ने मा किष्टेव्यथिरादधर्षीत् ॥३॥ उदग्ने तिष्ठ प्रत्यातनुष्वन्न्यमित्राँ२ ॥ ऽओषतातिग्महे ते ॥ यो नो ऽअरातिं समिधानचक्रे नीचातन्धंक्ष्यत सन्न शुष्कम् ॥४॥ ऊर्द्ध्वो भव प्रति विध्याध्यस्मदाविष्कृष्णुष्व दैव्यान्न्यग्ने ॥ अवस्थिरा तनुहि यातु जूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ॥५॥ ततो भूमौ तिलान्विकीर्य पितृमंत्रपुरुषसूक्ताप्रतिरथादीनि पाठित्वा ॥ तद्यथा ॥ ॐ उदीरतामवर० ॥१॥ ॐ सहस्रशीर्षा० १६ मंत्राः ॥ ॐ आशुः शिशानो० १२ मंत्राः ॥ ॐ नम-

स्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ॥ नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥ इति श्लोकमपि पठेत् ॥

बाद अन्न जल दोनिया में लेकर 'अनग्निदग्धा' इस मंत्र से भोजनपात्रके समीप कुशाके उपर अन्न देवे। किसी का मत है कि सव्य अपसव्य से पांचों जगह विकर देवै, सव्य होकर आचमन करै विष्णु का स्मरण करें।

तत उच्छिष्टसन्निधावास्तृतदक्षिणाग्रकुशत्रयां भूमिं प्रोक्ष्य सर्वप्रकारकमन्नतिलघृतजलसहितं पुटकादौ गृहीत्वा ॥ ॐ अनग्निदग्धाश्च ये जीवा येप्प्रदग्धा कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् ॥ इति कुशोपरि तदन्नं विकिरेत् ॥ ( सव्यापसव्येन वा पंचसु स्थानेषु विकिरेत् ) ततः सव्यम् ॥

आचम्य हरिं स्मृत्वा पिण्डस्थानं निर्माय [ वेदीं निर्माय ] तन्मध्ये वामहस्ते दर्भाग्रदक्षिणहस्तगृहीतदर्भपिञ्जुलीमूलेन प्रादेशमात्रं ॐ अपहतेति सव्याऽपसव्येन पंचसु स्थानेषु रेखा कुर्यात् ॥ दर्भपिंजुलीमुत्तरस्यां क्षिपेत् ॥ एवं सव्यापसव्येन ॐ ये रूपाणि प्रतिमुञ्चमाना ऽअसुराः सन्तः स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँश्लोकात्प्रणुदात्यस्मादिति मंत्रेण पञ्चसु रेखासु अङ्गारं भ्रामयित्वा अङ्गारं दक्षिणतस्त्यजेत् ॥ ततो रेखोपरि प्रत्येकं उपमूलसकृल्लूनकुशान्दक्षिणाग्राना-स्तीर्य सव्येनैव देवताभ्य इति त्रिर्जपेत् ॥

सव्य अपसव्य से ५ बेदी बनावै उस पर दोनो हाथ से कुश लेकर रेखा करै, कुशा उत्तर को फेकै

बाद रेखा पर अङ्गार घुमावै अंगार दक्षिण को फेक दे उसके बाद सव्यापसव्य से रेखा पर तीन तीन कुशा बिछावें आचमन कर के देवताभ्य तीन दफे पढ़ै ।

ततः पुटके पञ्चके जलयवगन्धपुष्पाणि कृत्वा पंचमपुटके यवस्थाने तिलान्कृत्वा प्रथमपुटकं वामहस्ते कृत्वा दक्षिणहस्तेन कुशादीन्यादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्मरणनिमित्तकनारायणबलिविहितपञ्चश्राद्धे ब्रह्मन् पिण्डस्थानेऽत्रावने निक्ष्व ते नमः ॥ एवं विष्णुरुद्रयमेभ्योऽवनेजनं तत्तदास्तृतकुशेषु दद्यात् ॥ ततः पंचमस्थानेऽपसव्येन पुटकं वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय ॥ ॐ अद्यामुकगोत्रामुकप्रेतप्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तक

नारायणबलिविहितपंचश्राद्धे पिण्डस्थानेऽत्रावने निक्ष्व ते मया दीयते तवोपतिष्ठ-ताम् ॥ ततस्तिलघृतमधुयुक्तपिण्डान्कृत्वा मधुघृताभ्यामभिघार्य ॥ सव्येनैव वामहस्ते पिण्डं दक्षिणहस्ते त्रिकुशयवजलान्यादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्यामुकदुर्म-रणानिमित्तकनारायणबलिविहितपंचश्राद्धे ब्रह्मन्नेष ते पिण्डो नमः ॥ इति वामा-न्वारब्धदक्षिणहस्तेन अवनेजनस्थाने पिण्डं दद्यात् ॥ एवं विष्णुरुद्रयमानां तत्त-दवनेजनस्थाने पिण्डं दद्यात् ॥

बाद पांच दोनियामें जल गन्ध पुष्प यव तिल लेकर पिंडके स्थानमें आधा जल गिरावै बाद संकल्प पूर्वक पिण्डदान करै ।

ततोऽपसव्येन मोटकादिसहितं पञ्चमपिण्डं गृहीत्वा अद्यामुकगोत्र अमुकप्रेतप्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलिविहितपञ्चश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठतामिति कुशोपरि अवनेजनस्थाने पिण्डं दद्यात् ॥

पिंडके नीचे जो कुशा है उसके मूलमें हाथ पोछै सव्य होकर आचमन करै विष्णु का ध्यान करै अपसव्य होकर उत्तर से स्वांस खोचकर पिंडकी तरफ छोड़ै।

आस्तृतदर्भमूले करं प्रोञ्छ्य ॥ सव्यं कृत्वाऽऽचाम्य हरिं स्मृत्वा अपसव्यं ॐ अत्र पितरो मादयध्वं यथाभागमावृषायिषत ॥ इति पठित्वा वामावर्तेनोदङ्मुखो भूत्वा मनाक् श्वासं नियम्य तेनैव यथासुखं पर्यावर्तयन् पितरं भास्वरमूर्तिं ध्यायन् ॐ अमी मदन्त पिता यथाभागमावृषायिष्ट इति पठेत् ॥

बाद आधा जल बचा हुवा पिंडके ऊपर प्रत्यवनेजन देवे। बाद वांई तरफके कमरकी मुरीं खसकावै सव्य होकर आचमन करैहरिका स्मरणकरै। बाद सूत चढ़ाकर पूजन करै। पिंडसे बचा हुआ अन्न पिंडके समीप में रखै। बाद सव्य अपसव्यसे भोजन पात्रपर जल पुष्प अक्षत देकर संकल्प अक्षय्योदक का करै।

ततः सव्यं कृत्वा ॥ अवनेजनावशिष्टजलयुतं पात्रं गृहीत्वा कुशादीन्यादाय अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलिविहितपञ्चश्राद्धपिण्डे ब्रह्मन् प्रत्यवनेनिक्ष्व ते नमः॥ एवं विष्णुरुद्रयमादीनां प्रत्यवनेजनं पिण्डोपरि दद्यात्॥ ततः पंचमपात्रं अपसव्येन वामहस्ते कृत्वा दक्षिणहस्तेन मोटकादीन्यादाय॥ अद्यामुकगोत्र पितरमुकप्रेतप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलिविहितपञ्चश्राद्धपिण्डेऽत्र

प्रत्यवनेनिक्ष्वते मया दीयते तवोपतिष्ठताम् ॥ ततो नीवीं विस्रंस्य सव्यं कृत्वा आचम्य हरिं स्मृत्वा वामेन पाणिना धृतं सूत्रं दक्षिणहस्तेनादाय एतत्ते ब्रह्मन् वासः इति पिण्डोपरि सूत्रं धृत्वा एवं विष्णुरुद्रयमादीनां पिंडोपरि सूत्रं दद्यात् ॥ ततोऽपसव्येन एतत्ते पितुर्वासः ॥ ततः सव्यं कुशत्रययवजलान्यादाय ॥ अद्यामुकगोत्रस्य पितुरमुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलिविहितपञ्चश्राद्धे ब्रह्मणे तद्वासस्ते नमः ॥ एवं विष्णोरेतद्वासस्ते० ॥ रुद्र एतद्वासस्ते नमः ॥ यम एतद्वासस्ते नमः ॥ अपसव्यम् ॥ मोटकतिलजलान्यादाय ॥ अद्यामुकगोत्रामुकप्रेतप्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थं अमुकदुर्मरण-

निमित्तकनारायणवलिविहितपञ्चश्राद्धे पिण्डे एतद्वासस्ते मया दीयते तवोपतिष्ठताम् ॥ ततः सव्यापसव्येन तूष्णीं पिण्डेषु गंधपुष्पधूपदीपताम्बूलानि दद्यात् ॥ ततः पिण्डशेषान्नं तत्तत्पिण्डसमीपे विकिरेत् ॥ ततः सव्यापसव्येन देवान्नपात्रे पित्र्यन्नपात्रे च ॐ शिवा आपः सन्त्विति जलम् ॥ ॐ सौमनस्यमस्त्विति पुष्पम् ॥ अक्षतं चारिष्टमस्तु इति तण्डुलान् क्रमेण दद्यात् ॥ ततः कुशत्रययवजलान्यादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणवलिविहितपंचश्राद्धे ब्रह्मणो दत्तैतदन्नपानादिकमक्षय्यमस्तु एवं विष्ण्वादीनामक्षय्योदकं दद्यात् ॥ तत अपसव्येन मोटकादीन्यादाय ॥ अद्यामुकगोत्रस्यामुक-

प्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलिविहितपंचश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम् ॥ इत्यक्षय्योदकं दद्यात् ॥ सव्यम् ॥ अघोरः पिताऽस्त्विति दक्षिणां दिशं पश्यन् पिण्डोपरि पूर्वाग्रां जलधारां दद्यात् ॥ ततः पूर्वाभिमुखो भूत्वा ॐ गोत्रन्नो वर्द्धतां दातारो नोभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो मा व्यगमद्बहुदेयं च नोस्तु ॥ अन्नं च नो बहु भवेदतिथींश्च लभेमहि ॥ याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ एताः सत्या आशिषः सन्तुइत्याशिषो ब्राह्मणो याचेत् ॥

इसके बाद सव्य और अपसव्यसे सहित पवित्र के तीन कुशा दक्षिण को अग्र कर के पिण्डों पर रखै दोनिया में जल व दूध लेकर कुशापर दक्षिणाग्रधारादे । बाद सव्य अपसव्य से दो दो मंत्र पढ़ कर, एक एक अंजलि जल संकल्प पूर्वक पिण्डोंपर क्रमसे देवे ।

ततः पिण्डोपरि सपवित्रकुशान्धृत्वा पुटकादिस्थितं जलं गृहीत्वा ॥ ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥ स्वधास्थ तर्पयत मे पितरम् ॥ इति प्रत्येकं पिण्डोपरि सव्यापसव्येन दक्षिणाग्रां जलधारां दद्यात् ॥ ततः सव्यापसव्येन पिण्डोपरि अंजलिदानं कार्यम ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौ विहितपञ्चश्राद्धे परलोके महातृषानिवृत्त्यर्थं द्वाभ्यां द्वाभ्यां मंत्राभ्यां पिण्डोपरि एकैकाञ्जलिदानमहं करिष्ये ॥ सव्यम् ॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ॥ होतारं रत्नधातमम् ॥ १ ॥ ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन ऽआवः ॥ स बुध्न्या ऽउपमा

अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ २ ॥ अद्या० प्रेतस्य प्रेतत्वविमुक्त्यर्थ-मुत्तमलो० अमुकदुर्मरणानि० नारायण० पञ्चश्राद्धे परलोके महातृषा० प्रथमे ब्रह्मपिण्डे जलांजलिस्ते नमः ॥ ॐ इषे त्वोर्जे त्वा वायवस्थ देवो वः सविता प्रार्प्पयतु श्रेष्ठतमाय कर्मण ऽआप्यायध्वमग्न्या ऽइन्द्राय भागम्प्रजावतीरनमीवा ऽअयक्ष्मा मावस्तेन ऽईशतमाघ शꣳसो ध्रुवा ऽअस्मिन्गोपतौ स्यात वह्वीर्यजमानस्य पशून्पाहि ॥ १ ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पाꣳसुरे स्वाहा ॥ २ ॥ द्वितीये विष्णुपिण्डे जलांजलिस्ते नमः ॥ ॐ अग्न ऽआयाहि वीतये गृणानो हव्यदातये ॥ निहोता सत्सि वर्हिषि ॥ १ ॥ ॐ नमस्ते रुद्रमन्यव

ऽउतोत ऽइषवे नमः ॥ बाहुभ्यामुत ते नमः ॥ तृतीये रुद्रपिण्डे जलांजलिस्ते नमः ॥ ॐ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये ॥ शं य्योरभिस्रवन्तु नः ॥ ॐ यमाय त्वांगिरस्वते पितृमते स्वाहा स्वाहा घर्माय स्वाहा घर्मः पित्रे । चतुर्थे यमपिण्डे जलांजलिस्ते नमः ॥ ॐ अपेतो यन्तु पणयो सुम्म्णा देवपीयवः ॥ अस्य लोकः सुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तं य्यमोददात्ववसानमस्मै ॥ १ ॥ प्रेता जयता नर ऽइन्द्रो वः शर्म्म यच्छतु ॥ उग्रा वः सन्तु बाहवो नाधृष्या यथासथ ॥ २ ॥ अपसव्यम् ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थमुत्तमलोकावाप्त्यर्थममुकदुर्मरणनिमित्तकनारायणबलौ विहितपञ्चश्राद्धे पंचमे प्रेतपिंडे जलांजलिः उपतिष्ठतु॥५॥

इसके बाद यव तिल सर्वोषधी जल शंख में लेकर, पिण्डों पर तीनवार या एकवार धारा देवे तृषानिवारणार्थ + बाद पिण्ड सूँघ कर उठावै । पिण्डके नीचे का कुशा व अंगार दूसरे अग्निमें छोड़े, अर्घ उलट देवे । श्राद्धकी दक्षिणा संकल्प करके देवे । बाद कलश संकल्प करै, ब्रह्माकी प्रीति के वास्ते ब्रह्म कलश ब्रह्मसूक्त जाप करने वाले ब्राह्मणको देवे ।

ततस्तिलयवदुग्धसर्वौषधीतुलसीदलहिरण्यमिश्रोदकेन दक्षिणहस्तशङ्खेन जलधारां दद्यात् ॥ ततस्तेनैवोदकेन अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलौ विहितपञ्चश्राद्धे पिंडोपरि इदमुदकमुपतिष्ठतु ॥ एवं त्रिवारमेकवारं वा पिंडोपरि दद्यात् ॥ ततः पिंडानाघ्रायोत्थापयेत् ॥ पिण्डाधारकुशानुल्मुकं च वह्नौ क्षिपेत् ॥ सव्येनार्घपात्रचतुष्टयं संचाल्याऽपसव्येन पञ्च-

मार्घपात्रमुत्थाप्य सव्येन कुशत्रययवजलान्यादाय दक्षिणाद्रव्यं चादाय ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वविमुक्त्यर्थं उत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलौ विहितपंचश्राद्धे कृतैतद्ब्रह्मणः श्राद्धप्रतिष्ठार्थं इदं हिरण्यं अग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ॥ इति दक्षिणां दद्यात् ॥ एवं विष्णुरुद्रयमादीनां दक्षिणां दद्यात् ॥ तत अपसव्यं मोटकादीन्यादाय ॥ अद्यामुकगोत्रस्य पञ्चश्राद्धे कृतैतत्प्रेतश्राद्धकर्मणः० प्रतिष्ठार्थं रजतं चंद्रदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ॥ ततः कलशसंकल्पः ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य प्रेतत्वनिवृत्योत्तमलोकावाप्त्यर्थं अमुकदुर्मरणनिमित्तकनारायणबलि-

विहितपञ्चश्राद्धे ब्रह्मलोकावाप्त्यर्थं ब्रह्मप्रीत्यर्थं च तीर्थवारिपूरितं सफलं वस्त्रोपवीताऽन्न-प्रतिमा-नालिकेरसहितमिमं ताम्रकलशं ब्रह्मदैवतं ब्रह्मसूक्तजापिने ऽमुकगोत्रायऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे तेन ब्रह्मा प्रीणातु ॥ १ ॥

विष्णुलोकप्राप्त्यर्थं विष्णुकलश विष्णुजापी ब्राह्मण को, रुद्रलोकप्राप्त्यर्थं रुद्रकलश रुद्रसूक्तजापी ब्राह्मण को, यमलोक से छूटने के लिये यमकलश यमसूक्त जापी ब्राह्मण को, प्रेतलोक से छूटने के लिये प्रेत कलश प्रेतसूक्त जापी ब्राह्मण को संकल्प करके देवे। नारायणबलि की अंग पूर्ति के लिये ऋग्वेदी ब्राह्मण को उपजाऊ भूमि देवे, यजुर्वेदी को दूध देने वाली गौ, सामवेदी को सोना, अथर्ववेदी को तिल लोहा दक्षिणा देवे। यह उत्तम दक्षिणा न दे सके तो इसके अभाव में सबकी संतुष्टि के वास्ते यथाशक्ति सोना देवे और भी यथाशक्ति पददान घी भरा काँसे का पात्र देवे। बाद 'देवताभ्य' इस मंत्रको तीन दफे पढ़े। अपसव्य होकर दीया को हाथसे बुझावै। हाथ पैर धोकर आच-

मन करै। यथाशक्ति ब्राह्मण भोजन का संकल्प करै। न्यून अधिक कर्म की पूर्ति के वास्ते भूयसी दक्षिणा का संकल्प करै। श्राद्ध की वस्तु ब्राह्मण को देवे या जलमें छोड़ देवे।

एवं विष्णुरुद्रयमानां च तत्तल्लोकावाप्त्यर्थं तत्तद्देवता प्रीत्यर्थं तत्तत्सूक्त-जापिने ब्राह्मणाय दद्यात् ॥ तत्र यमकलशदाने यमलोकनिवृत्यर्थमिति ज्ञेयम् ॥ अपसव्येन अद्येत्यादि पठित्वा पंचश्राद्धे प्रेतकलशदाने प्रेतलोकनिवृत्त्यर्थं प्रेतसूक्त-जापिने दद्यात्॥ततो नारायणवलिसांगतासिध्यर्थं ऋग्वेदिने सस्योपेतां भूमिं,यजुर्वे-दिने पयस्विनीं धेनुं, सामगाय सुवर्णं, अथर्ववेदिने तिललोहं च दक्षिणां दद्यात् ॥ उत्तमदक्षिणाभावे सर्वेषां तुष्टिकरं यथाशक्ति सुवर्णं वा दद्यात् ॥ ततो यथाशक्ति

पददानं घृतपात्रदानं च कार्यम् ॥ ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ इति त्रिर्जपेत् ॥ अपसव्येन पाणिना दीपं निर्वाप्य ॥ हस्तौ पादौ प्रक्षाल्याऽऽचम्य ॥ अद्यामुकगोत्रस्यामुकप्रेतस्य नारायणबलिकर्मणः साङ्गतासिध्यर्थं यथाशक्ति ब्राह्मणान्भोजयिष्ये ॥ तत अस्मिन्कर्मणि न्यूनातिरिक्तदोषपरिहारार्थं नानानां गोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च भूयसीं दक्षिणां विभज्य दातुमहमुत्सृजे ॥ श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् ॥ जले वा क्षिपेत् ॥

अन्यगोशय्यादिना ब्राह्मणान्संतोष्याऽनेन कर्मणा विष्णुः इमं प्रेतं शुद्ध-

मपापमगर्हितं करोतु इति वाचयित्वा ॥ स्वयं स्नात्वा गृहे गत्वा गणपतिं संपूज्य पुण्याहं वाचयित्वा ॥ गुडशर्करापायसादिना स्वजनैः सह भुञ्जीत ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेत्ताध्वरेषु यत ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुति ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां यातु सद्यो वन्दे तमच्युतम्॥इति पं॰श्रीवायुनन्दनमिश्रेणाग्निहोत्रिणा विरचितो नारायणबलिप्रयोगः ॥

और अन्य कोई भी कहते हैं कि गौ शय्या आदि ब्राह्मण को देकर संतुष्ट करै । बाद को विष्णु से कहे कि इस कर्म करने से प्रेत शुद्ध हो, पापसे छूटकर मोक्ष को प्राप्त हो । अपने स्नान करै घरको जावे, गणेशका पूजन करे, पुण्याहवाचन करे, गुड शक्कर पायस ( खीर ) इत्यादि अपने जनों के सहित करै । 'प्रमादात्' 'यस्य स्मृत्या' दोनों श्लोकों को पढ़े । न्यून कर्म की पूर्णता के वास्ते जो कुछ

प्रमाद से अज्ञानता से कर्म छूट गया हो सो विष्णु के स्मरण करने सम्पूर्ण हो ॥ इति नारायणबलि टीका समाप्त ॥

केचित्तु ॥ शुभमरणस्यापि अयं विधिर्यथासम्भवं कृत्वा पारलौकिकं कुर्यात् एवं वदन्ति ॥ छागलेयः ॥ नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ॥ तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥ व्यासः ॥ नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते॥ तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथेति ॥ स चात्मघातादि प्रायश्चित्तं कृत्वा कार्यः हेमाद्रौ षड्विंशन्मते ॥ कृत्वा चान्द्रायणं पूर्वं क्रिया कार्या यथाविधि ॥ नारायणबलिः कार्यो लोकगर्हाभयान्नरैः ॥ पिंडोदकक्रिया पश्चाद्वृषोत्सर्गादिकं च यत् ॥ एकोद्दिष्टानि कुर्वीत सपिंडीकरणं तथेति ॥ नारायणबलिः कार्यो लोकगर्हाभया-

न्नरैः ॥ एकादश्यां च शुक्लायां पंचम्यां श्रवणेन वेति ॥ एतेषामन्तरे काले पूर्वे ॥ पूर्वेद्युः तदहरेव वा दुर्मरणजनितदोषपरिहारार्थं प्रायश्चित्ताचरणं कुर्यात् ॥ देवराज देवीये तु ॥ नारायणबलिक्रियाधिकारार्थं वीरभोजनमप्युक्तम् ॥

शुभ मरणकी भी यही विधि है। सो यथा सम्भव करके पीछे पारलौकिक करै। छागलेय ऋषि का मत है कि लौकिक निन्दाके भयसे मनुष्योंको नारायणबलि कर्म करना उचित है। क्योंकि नारायण-बलि कर्मसे ही उनकी शुद्धि हो सकती है। अन्य प्रकारसे नहीं हो सकती। इस प्रकार यम ने कहा है। व्यासजीने कहा है कि नारायणको अथवा शिवको उद्देश लेकर जो दिया जाता है उसका वह कर्म शुद्धि करने वाला है और अन्य प्रकारसे वह कर्म शुद्धि करनेवाला नहीं होता। परन्तु वह कर्म आत्मघात आदि प्रायश्चित्त करके करना उचित है। हेमाद्रिषड्विंशति का मत है कि चान्द्रायण व्रत करके बाद

यथा विधि नारायणवलि क्रिया लोकनिंदाके भयसे मनुष्योंको अवश्य करना उचित है । प्रथम पिण्डोदक क्रिया करके बाद वृषोत्सर्ग कर्म करना पीछे एकोदिष्ट करे तथा सपिण्डी श्राद्ध करै । लोक निन्दाके भयसे नारायणवलि मनुष्यों को करना योग्य है, परन्तु एकादशीके दिन, शुक्लपक्षकी पंचमीके दिन और श्रवण नक्षत्रमें नहीं करना । इनसे अन्य और किसी कालमें पहिले दिन अथवा उसी दिन दुर्मरणसे उत्पन्न हुए दोषके दूर होनेके लिये प्रायश्चित्तका आचरण करै । और देवराजदेवीयमें तो नारायणवलि क्रियाके अधिकारके लिये वीर भोजन भी कहा है ।

तत्र संक्षेपेण प्रयोगः ॥ देशकालौ संकीर्त्य अमुकनामधेयस्य दुर्मरणदोष-निवृत्तिपूर्वकप्रेतत्वविमोक्षार्थं नारायणवल्यधिकारार्थं च वीरभोजनं करिष्ये ॥ द्वादशाऽष्ट चतुरो वा विप्रान् भोजयेत् ॥ भो वीरस्वरूप ब्रह्मनिदमासनम् ॥ रक्त-गन्ध-करवीर-

पुष्प-सिन्दूर धूपादिभिः सम्पूज्य पात्रे अन्नं परिविष्य अभ्युदय भो वीर इदमन्नं परिविष्टं परिवेष्यमाणां चातृप्तेः स्वाहा हव्यं न मम इत्युक्त्वा जलं विसृज्य प्रार्थयेत् ॥ पृथिव्यां ये स्थिता वीराः प्रेतमोक्षप्रदायकाः ॥ प्रलयानलमुख्यास्ते गृह्णन्त्वन्नादि कल्पितम् ॥१॥ येऽन्तरिक्षे स्थिता वीराः प्रेतपिण्डाविधायकाः ॥ यातुधानास्तु ते प्रेतमन्नमश्नन्तु कल्पितम् ॥२॥ ये द्यौर्लोके स्थिता वीराः प्रेतस्य गतिकारकाः ॥ मया कल्पितमन्नादि प्राश्नन्तु पूजिताः सदा ॥ इति प्रार्थ्य भुक्तवत्सु द्विजेषु दक्षिणां ताम्बूलं च दत्वा नमस्कृत्याशिषो गृहीत्वा विष्णुं स्मरेदिति वीरभोजनविधिः ॥

सो संक्षेपसे प्रयोगको कहते हैं। देश और कालका कीर्तन करके, बाद गोत्रनाम लेकर, वीर भोजन के लिये बारह, या आठ, या चार ब्राह्मणोंका पूजन करके भोजन करावै। और कहै कि हे वीर स्वरूप

ब्रह्मन् ! यह आसन तुम्हारे लिये है। लालचंदन, लालकनैल का फूल, सिन्दूर, धूप, दीप आदि से पूजन करके पत्तलोंपर अन्न परोस कर जल छिड़कै और यह कहै कि हे वीर यह परोसा हुआ अन्न और जो आगे परोसने को है सो अन्न आप के अर्थ है यह हव्य तुह्मारे अर्थ है मेरा ममत्व इस पर नहीं है ऐसा कहकर प्रार्थना करै कि जैसा कि प्रेत मोक्ष के देनेवाले जो पृथिवी के ऊपर स्थित हैं प्रलयानल मुख्य वे वीरकल्पित ग्रहण करो। प्रेतपिण्ड के विधान करनेवाले जो वीर अंतरिक्ष में स्थित हैं हे यातुधान कल्पित प्रेत अन्न को भोजन करो॥ प्रेत की गति करनेवाले जो वीर स्वर्गलोक में स्थित हैं वे सदा पूजित किये वीर मेरा कल्पित किया अन्नादि भोजन करो। प्रार्थना करके भोजन करने पर दक्षिणा व पान देकर नमस्कार करके आशिर्वाद ग्रहण करे बाद विष्णु का स्मरण करै। इति वीरभोजनविधिः॥

मिताक्षरास्मृत्यर्थसारयोः होमतर्पणावलयो नोक्ताः॥ ततः प्रतिदैवतं त्रिविधफलं समर्प्य मधु शर्कराघृतगुडानि निवेद्य पिण्डानभ्यर्च्य विसर्जयेत्॥ इत्यत्र विशेषान्तरं

श्राद्धचिन्तामणि-श्राद्धसागर-देवजानिनिर्णय-स्मृतिकौस्तुभ-स्मृत्यर्थसार-मिताक्षरा-नारायणभट्टकृतान्त्येष्टिपद्धति-विश्वनाथीयक्रियापद्धति-संस्कारप्रकाश-निर्णयसिन्ध्वादिषु ज्ञेयम् ॥ इति शुभमरणनारायणबलिक्रमः समाप्तः ॥

मिताक्षरा तथा स्मृत्यर्थसार में होम तर्पण और बलि नहीं कही है उस के अनन्तर देवता के प्रति तीन प्रकार के फल समर्पण करें और शहद, चीनी, घी, गुड अर्पण करके पिण्डका पूजन करके विसर्जन करै। यहाँ विशेष देख श्राद्ध चिन्तामणि, श्राद्धसागर, देवजानि निर्णय, स्मृतिकौस्तुभ, स्मृत्यर्थसार, मिताक्षरा, नारायणभट्ट कृत अन्त्येष्टिपद्धति, विश्वनाथीयक्रियापद्धति, संस्कार प्रकाश, और निर्णय सिन्धु आदि ग्रन्थों में जानना ॥ इति काशीस्थमध्यमेश्वरवास्तव्येन पं० वायुनन्दनमिश्रेणाग्निहोत्रिणा विरचितशुभमरणनारायणबलिप्रयोगक्रमः समाप्तः ॥

## ❀ सामग्री ❀

| | | | |
|---|---|---|---|
| १६ प्रायश्चित्त गोदान | माला फूल २५ | पंचपल्लव | सीसा की प्रतिमा १ |
| मृत्तिका | पेड़ा ऽ॥ | पंचामृत | लोहे की प्रतिमा १ |
| गोबर | बतासा ऽ। | पंचगव्य | काँसे की थाली १ |
| कुशा | ✓) ऋतुफल | पंचरत्नपुड़िया ६ | ६ धोती डुपट्टा ६ |
| चावल ऽ२ | पान १०० | सप्तमृत्तिका | तांबे का तष्टा १ (कोपर) |
| तिल ऽ१ | सोपाड़ी १०० | ✓) सर्वौषधी | बटलोही १ |
| यव ऽ१ | वरणी ६ मयसामान | सोने का टुकड़ा ७ | सँड़सी १ |
| घिसा हुआ चन्दन | नारियल ७ | सोने की प्रतिमा २ | चिमटा १ |
| ✓) धूपबत्ती | सफेदवस्त्र थान १ | चाँदी की प्रतिमा १ | घी ऽ१ |
| दीपबत्ती २५ | कलशतांबेका ६ मैढकना | ताँबे की प्रतिमा १ | खाँड़ ऽ॥ |

दूध ऽ१।
शंख छोटी १
पीलो सरसो ऽ–
जनेऊ २५
)। कचा सूत
शहद छटाँक ऽ–
आमान्न ११ सेर

( एकादश दान )
सोना, चाँदी, वस्त्र, गुड़, घृत, नोन, लोहदंड, तिल, धान्य, महिषी, चँवर, दोनिया छोटी १००

( पददान )
आशन १३
जूता १३
छाता १३
पवित्रि १३
लोटा १३
थाली १३ काँसे की

वस्त्र १३
उपवस्त्र १३
घड़ा बड़ा १३
काँसे का कटोरा १
तिलपात्र ताँबे का १
छायापात्र काँसे का १

इति सामग्री ॥